कर्यन्तोपजीविष्याम इति ॥६॥ स विद्यादहमेव सामास्मि मन्येता देवता इति ॥७॥ १ । १३॥

तृतीयेऽनुवाके तृतीय खण्ड ।

न ह दूरे देवतस्स्यात्[1] । यावद्ध वा आत्मना देवानुपास्ते तावदस्मै देवा भवन्ति ॥ १ ॥ अथ य एतदेवं वेदाऽहमेव सामाऽस्मि मन्येतारसर्वा[2] देवता इत्येवं[3] हाऽस्मिन्नेतास्सर्वा देवता भवन्ति ॥२॥ तदेतद्देवश्रुत्साम[4] । सर्वा ह वै देवताश्शृण्वन्त्येवं-विदम्पुण्याय साधवे । ता एनम्पुण्यमेव साधु कारयन्ति ॥३॥ स ह स्माऽऽह श्रुचित्तश्शैलनो[5] यो यज्ञकामो मामेव स वृणीताम् । तत एवैऽनं यज्ञ उपनंस्यति । एवंविद् ह्युद्गायन्तं सर्वा देवता अनुसंतृप्यन्ति । ता अस्मै तृप्तास्तथा कुरिष्यन्ति यथैऽनं यज्ञ उपनंस्यतीऽति ॥४॥ १ । १४॥

तृतीयेऽनुवाके चतुर्थ खण्ड । तृतीयोऽनुवाकस्समाप्त ।



देवा वै स्वर्गं लोकमैप्सन्[1] । तं न शयाना नाऽऽसीना न तिष्ठन्तो[2] न धावन्तो नेव केनचन कर्मणाऽऽप्नुवन् ॥ १ ॥ ते देवाः प्रजापतिमुपायन्[3] स्वर्गं वै लोकं मैप्सिष्म । तं न शयाना

१ देवत । २ श्रोम । ३ यम्म । ४ देवश्रुत । देवश्रुत । ययश्रुत । ५-न ।
१-ऽऽसीना । २-न्तो । ३ उपाय-।

नाऽऽसीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाऽऽपाम। तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयामे[4]ऽति ॥२॥ तानब्रवीत साम्नाऽनूचेन स्वर्गं लोकम्प्रयाते[5]ऽति । ते साम्नाऽनूचेन स्वर्गं लोकम्प्रायन्[6] ॥ ३ ॥ प्र वा इमे साम्नाऽगुरिति । तस्मात्प्रसाम तस्मादु प्रसाम्यन्नमाचि[7] ॥४॥ देवा वै स्वर्गं लोकमायन्[8] । त एता-न्यृकपदानि शरीराणि धून्वन्त आयन् । ते[9] स्वर्गलोकमजयन् ॥५॥ तान्या दिवः प्रकीर्णान्यशेरन् । अथेऽमानि प्रजापतिर्ऋक्पदानि शरीराणि सञ्चित्याऽभ्यर्चत् । यदभ्यर्चत्[10] ता[11] एवर्चोऽभवन् ॥६॥ १ । १.५॥

चतुर्थेऽनुवाके प्रथमः खण्डः ।

सैऽस्वर्गमभवदियमेव श्रीः । अतो देवा अभवन् ॥१॥ अथेऽपामिमामसुराश्श्रियम[1]विन्दन्त । तदेवाऽऽसुरमभवत् ॥२॥ ते[2] देवा[3] अब्रुवन् या वै नश्श्रीरभूदविदन्त[4] तामसुरः । कथं न्वेपा-मिमांश्रियम्पुनरेव[5] ज्येमेऽति ॥३॥ तेऽब्रुवन्नृच्येव साम गायामेति ।

---

४ प्रयामे । ५ प्रयाते, प्रयामे, प्रयामे । ६ लोकंमप्रायन् । ७ इसके बाद कुछ गड़बड़ है। ५ के पूर्व यह सब में लिखा है 'त एतान्यृकपदानि शरीराणि धून्वन्त आयन् ( त्वंयन् )। ते स्वर्गं लोकमजयन् (–अन्त)। अथेऽमानि प्रजापतिर् ...ताएवर्चोऽभवन् । ८ यत् । ९ ओम् । ते स्वर्गं अजयन्, यहां अधिक है। १० ओम। यदु...... । ११ ओम । ता एव।

१ आस्–। २ तद् । ३ एवा । ४ विन्दन्त । ५ अव ।

ते पुनः प्रत्याहृत्यार्च्ये[६] सामाऽगायन् । तेनाऽस्माल्लोकाद-
सुरान्नुदन्त ॥४॥ तद्वै माध्यन्दिने च सवने तृतीयसवने[७] च
नवोंऽपराधोऽस्ति[८] । स यचे ऋचि[९] गायति तेनाऽस्माल्लोकाद्
द्विषन्तम्भ्रातृव्यं नुदते । अथ यदमृते[१०] देवतासु गायत्रसवनं गायति
तेन स्वर्गं लोकमेति ॥५॥ प्रजापतिर्वै साम्नेऽमां जितिमजयद्याऽस्ये-
ऽयं जितिस्ताम्[११] । स स्वर्गं लोकमारोहत्[१२] ॥६॥ ते देवाः प्रजापति-
मुपेत्याऽब्रुवन्नस्मभ्यमपीऽदं साम प्रयच्छेति । तथेति । तद्देभ्य-
स्साम प्रायच्छत् ॥७॥ तदेनानिदं साम स्वर्गं लोकं नाऽऽकामयत[१३]
वोढुम् ॥८॥ ते देवाः प्रजापति मुपेत्याऽब्रुवन् यद्वै नस्साम प्रादा
इदं वै नस्स्वर्गं लोकं न कामयते[१४] वोढुमिति ॥९॥ तद्वै पाप्मना
संसृजतेति । कोऽस्य पाप्मेति । ऋगिति । तदृचा समसृजन्
॥१०॥ तदिदम्प्रजापतेर्गर्दयमाणमनिष्ठुदिदं वै मा तत्पाप्मना सम-
स्राक्षुरिति[१५] । सोऽग्नीध्रस्यैतेन न्यावर्तयाद्वचेव स पाप्मना वर्तीता
इति ॥११॥ स य एतदृचा प्रातस्सवने न्यावर्तयति व्येव[१६] स
पाप्मना वर्तते ॥१२॥ २ । १६॥

चतुर्थेऽनुवाके द्वितीय खण्डः ।

---

६-द्धत्या । ७ गीत्-। ८-परार्धो । ९-र्चि । १०-भूते । ११ तम्।
१२ भर-। १३ न कामायते, न कामयते । १४ कामय्-, सामय्,।
१५संस्रु- । १६ पच ।

नवाहुर्यदोवा ओव। इति गीयते कात्रम्भवति क सामेति।।१।।
प्रस्तुयेत्पाष्टाभिरक्षरैः प्रस्तौति । अष्टाक्षरा गायत्री। अक्षरमक्षरं
त्र्यक्षरम् । तच्चतुर्विंशतिस्सम्पद्यन्ते। चतुर्विंशत्यक्षरा गायत्री ।।२।।
तामेतामप्रस्तावे[1]नैर्नैवमाप्त्वा या श्रीर्याऽपचितिर्यस्स्वर्गो[2] लोको यद्यशो
यदन्नाद्यं नान्यागायमान आस्ते ।।३।। १।१७।।

चतुर्थेऽनुवाके तृतीयः खण्ड ।

प्रजापतिर्देवानसृजत । तान्[1] मृत्युः पाप्मान्वसृज्यत ।।१।।
ते देवा प्रजापतिमुपेत्याब्रुवन् कस्मादु[2] नोऽसृष्ठा[3] मृत्युं चेन्नः पाप्मा-
नमन्ववस्रक्षयन्[4]नासियेति ।।२।। तानब्रवीच्छन्दांसि सम्भरत। तानि
यथायतनम्प्रविशत[5] ततो मृत्युना पाप्मना व्यावर्त्स्य[6]येति ।।३।।
वसवो गायत्रीं समभरन्। तां ते प्राविशन्। तान् साऽच्छादयत
।।४।। रुद्रास्त्रिष्टुभं समभरन् । तां ते प्राविशन् । तान् साऽच्छाद-
यत्[7] ।।५।। आदित्या जगतीं समभरन्। तां ते प्राविशन् । तान्
साऽच्छादयत् ।।६।। विश्वेदेवा अनुष्टुभं समभरन्। तां ते प्राविशन्।
तान् साऽच्छादयत् ।।७।। तान् अस्यामृच्यस्वरायाम्[8]मृत्युर्निरजा-

---

१ प्रस्तावेप्रस्तवेन । २-र्गे ।

१ ता, ताः । २ कस्मा । ३-ष्टा । ४-स्रक्षन् । ५-शत् ।
६-त्स्य, यत्स्य- । ७ च्छाद्, याम् ।

नाद्यथा मणौ मणिसूत्रम्परिपश्येदेवम् ॥८॥ ते स्वरम्प्राविशन् । तान् स्वरे सतो न निरजानात् । स्वरस्य तु घोषेणाऽन्वैत् ॥९॥ त ओमित्येतदेवाक्षरं समारोहन् । एतदेवाक्षरं त्रयीविद्या । यददो ऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त ॥१०॥ एवमेवैवं विद्वान् ओमित्येतदेवाक्षरं समारुह्य यददोऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्ततेऽथो यस्यैवं विद्वानुद्गायति ॥११॥ १।१८॥

चतुर्थेऽनुवाके चतुर्थं खण्डः । चतुर्थोऽनुवाकस्समाप्तः ॥

---

अथैतदेकविंशं साम ॥१॥ तस्य अग्निरेव विद्या हिङ्कारः । अग्निर्वायुरसावादित्य एष प्रस्तावः । इम एव लोका आदिः । तेषु हीदं लोकेषु सर्वमाहितम् । श्रद्धा यज्ञो दक्षिणा एष उद्गीथः । दिशोऽवान्तरदिश आकाश एष प्रतिहारः । आपः प्रजा ओषधय एष उपद्रवः । चन्द्रमा नक्षत्राणि पितर एतन्निधनम् ॥२॥ तदेतदेकविंशं साम । स य एवमेतदेकविंशं साम वेदैतेन हास्य

---

८–वेद् । ९ नास्ति । १० ओ । ११–वेद् । १२ यददो, ओ ।

१ वे । २ वायसुर । ३ येषु । ४–ज्ञा ।

सर्वेणोद्गीतमभवत्तेतस्माद्धैव[5] सर्वस्मादात्मनोऽन्यने[6] य एव विद्वांसमुपवदति ॥३॥ १।५।३॥

पञ्चमोऽनुवाकस्समाप्तः ।

—— ० ——

इदमेवेदमग्रेऽन्तरिक्षमासीत्[1] । तद्धैवाप्येतर्हि ॥१॥ तद्यदेतदन्तरिक्षं[1][2] य एवा[3]ऽयम्[4]पवत एतदेवान्तरिक्षम्[1]। एष ह वा अन्तरिक्षनाम[1][5]॥२॥ एष उ एवैष विततः तद्यथा काष्ठेन पक्षौ विष्कब्धे स्यातामक्षेण वा चक्रावेवमेतेनेमौ[6][7] लोकौ विष्कब्धौ ॥३॥ तस्मिन्निदं सर्वमन्तः । [8]तद्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम् । अन्तर्यक्षं[9] ह वै नामैतत् । तदन्तरिक्षमिति[1] परोक्षमाचक्षते[10] ॥४॥ तद्यथा मूताः प्रबद्धाः प्रलम्बेरन्नेवं हैतस्मिन्सर्वे लोकाः प्रबद्धाः प्रलम्बन्ते ॥५॥ तस्यैतस्य साम्नान्तरिक्ष[11] भागास्त्रीण्यागीतानि[12] षड्भूतान्यथ नव प्रतिष्ठा दश प्रगास्सप्त संस्था द्वौ स्तोभावेकं रूपम्[13] ॥६॥ तस्यान्तरिक्ष भागा इम एव ते[14] लोकाः ॥७॥ अथ यानि (त्रीण्य्) आगीतान्यग्निर्वायुरसा

---

५-अस् । ६ आवृश्च्येते ।

१-रिक्ष्-। २ अधिक है ' एष ह वा अन्तरीक्षम् । ३ एवम् । ४ नास्ति । ५-क्षोना-। ६ नवम । ७ एतेन । ८ नास्ति । तद्"" अन्तस् । ९ नास्ति । १०-चन्द-। ११-नंस् । १२ अगमा । १३ एकरैपम, एकरूपम् । १४ तो ।

यादित्य एतान्यागीतानि । न ह वै कांचनश्रियमपराध्नोति य एवं वेद ॥८॥ १।२९॥

षष्ठेऽनुवाके प्रथमः खण्डः ।

अथ याः षड् विभूतय ऋतवस्ते ॥१॥ अथ याश्चतस्रः प्रतिष्ठा इमा एव ताश्चतस्रो दिशः ॥२॥ अथ ये दश प्रगा इम एव ते दश प्राणाः ॥३॥ अथ यास्सप्त[1] संस्था या एवैता[1]स्सप्ता[2]होरात्राः प्राचीर्वषट्कुर्वन्ति[3] ता एव ताः ॥४॥ अथ यौ द्वौ स्तोभावहोरात्रे एव ते ॥५॥ अथ यदे[4]करूपं[5] कर्मैव तत् । कर्मणा हीदं सर्वं क्रियते ॥६॥ तस्यैतस्य साम्नो देवा आजिमायन् । स प्रजापतिर्हिंकारमुदजयदग्निस्तेजसा प्रस्तावं[6] रूपेण बृहस्पतिरुद्गीथं स्वधया पितरः[7] प्रतिहारं वीर्येणेन्द्रो निधनम् ॥७॥ अथेतरे देवा अन्तरिता इवासन् । त इन्द्रमब्रुवन् तव वै वयं स्मोऽनु न एतस्मिन् सामन्ना-भजेति॥८॥ तेभ्यस्स्वरं[8] प्रायच्छत् । तं प्रजापतिरब्रवीत्कथेत्थमकः । सर्वं वा एभ्यस्साम प्रादाः । एतावद्वाव साम यावान् स्वरः । अपगा एपतें स्वराद्भवतीति ॥९॥ सोऽब्रवीत् पुनर्वा अहमेषा[10]मेतं रसमादा-स्य इति । तानब्रवीऽदुप मा गायत । अभि मा स्वरतेति । तथेति

---

१ नास्ति । सप्त ······एतास् । २–प्रा । ३ यर्प– । ४ यद् । ५ रूंपि । ६–सं । ७ नावय । ८–रम । ९ सपर– । १० एषौ, एषोम ।

॥१०॥ तमुपागायन् । तमभ्यस्वरन् । तेषाम्पुनारसमादत्त[११]॥११॥ ११२१॥

षष्ठेऽनुवाके द्वितीय खण्ड ।

स यथा मधुधाने[१] मधुनाळीभिर्मन्चासिञ्चादेवमेव तत्सामन् पुना रसमासिञ्चन् ॥१॥ तस्माद्‍ ह नोऽपगायेत् । इन्द्र एष यदुद्गाता । स यथा सारमेघाँ[२] रसमादत्त एवमेष तेषां रसमादत्ते ॥२॥ कामं ह तु यजमान उपगायेद्यजमानस्य हि तद्वसथो ब्रह्मचार्याचार्योक्तः ॥३॥ तद्‍ वा आहुर्नैव[३] गायेत् । दिशो ह्युपागायन्[४] दिशामेवं सलोकतां जयतीति ॥४॥ ते य एवेमे[५] मुख्याः[६] प्राणा एत एवोद्गातारश्चोपगातारश्च । इमे ह त्रय उद्गातार इम उ चत्वार उपगातारः ॥५॥ तस्माद्‍ चतुर एवोऽपगातॄन्[७] कुर्वीत। तस्मादुद्गोऽपगातॄन्[८] मत्याभिमृशेद्विरस्थ्यश्रोत्रं मे माहिंसिष्टेति ॥६॥ स यस्य रस आसीय एवायम्पवत एष एव स रसः ॥७॥ स यथा मध्वालोपमद्यादिति ह स्माह सुचित्तश्शैलन एवमेतस्य रसस्यात्मानम्पूरयेत । स एवोद्गातात्मानंच यजमानं चामृतत्वं गमयतीति ॥८॥ १।२२

षष्ठेऽनुवाके तृतीय खण्ड । षष्ठोऽनुवाकस्समाप्त ।

---

११–त्ता ।

१–धुवने । २ 'स' अधिक पद्दो । ३–यत् । ४–शम् । ५ एवं । ६ घ । ७ऽद्गा–,–तॄन् । ८–तॄन् ।

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥१॥ स यस्स आकाशो वागेव सा । तस्मादाकाशाद्वाग्वदति ॥२॥ तामेतां[1] वाचम्प्रजापतिरभ्यपीळयत् । तस्या अभिपीळितायै रसः[2] प्राणेदत्[3] । त एवेमे लोका अभवन् ॥३॥ स इमाँ[4] लोकानभ्यपीळयत् । तेषामभिपीळितानां रसः प्राणेदत् । ता एवैता देवता अभवन्नग्नि-र्वायुरसावादित्य[5] इति ॥४॥ स एता देवता अभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । सा त्रयीविद्याभवत् ॥५॥ स[6] त्रयी विद्यामभ्यपीळयत् । तस्या अभिपीळितायै रसः प्राणेदत् । ता एवैता व्याहृतयो ऽभवन् भूर्भुवस्स्वरिति ॥६॥ स एता व्याहृतीरभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । तदेतदक्षरमभवदोमिति यदेतद् ॥७॥ स एतदक्षरमभ्यपीळयत् । तस्याऽभिपीळितस्य[7] रसः प्राणेदत् ॥८॥ १२३॥

सामेऽनुवाके प्रथमः खण्डः ।

तदक्षरदेव । यदक्षरदेव[1] तस्मादक्षरम् ॥१॥ यद्वेवाक्षरं नाक्षीयत तस्मादक्षयम् । अक्षयं ह वै नामैतत् । तदक्षरमिति

१. एता था । २ रसम् । ३ 'स त्रयीम् ... रसम् (!) प्राणेदत्' अधिक है । ४ नास्ति । ५-त्या । ६ नास्ति । स त्रयीम ... प्राणेदत् । ७-स्य ।

१-या ।

परोक्षमाचक्षते ॥२॥ तद्धैतदेक ओमिति गायन्ति । तत्तथा न गायेत । ईश्वरो हैनदेतेन रसेनान्तर्धातोः[२] । अथो[३] द्वे[४] इवैवम्भवत ओमिति । ओ इत्यु हैके गायन्ति । तदु ह[५] तत्र[६] गीतम् । नैव[७] तथा गायेत् । ओं[८] इत्येव गायेत् । तदेनदेतेन रसेन सन्दधाति ॥३॥ तदेतं रसं तर्पयति । रसस्तृप्तोऽक्षरं तर्पयति । अक्षरं[९] तृप्तं व्याहृती स्तर्पयति । व्याहृतयस्तृप्ता वेदाँस्तर्पयन्ति । वेदास्तृप्ता देवतास्तर्पयन्ति । देवतास्तृप्ता लोकाँस्तर्पयन्ति । लोकास्तृप्ता अक्षरं तर्पयन्ति । अक्षरं तृप्तं वाचं तर्पयति[१०] । वाक्[११] तृप्ताकाशं तर्पयति । आकाशस्तृप्तः प्रजास्तर्पयति । तृप्यति प्रजया पशुभिर्य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति[१२] ॥४॥ १२४॥

सप्तमेऽनुवाके द्वितीय खण्ड । सप्तमोऽनुवाकस्समाप्तः ।

—— ०:——

अयमेवेदमग्र[१] आकाश आसीत् स उ एवाप्येतर्हि ॥१॥ स यस्स आकाश आदित्य एव स । एतस्मिन् (ह्यु) उदिते[२] सर्वमिदमाकाशते ॥२॥ तस्य मर्त्यामृतयोर्वै[३] तीराणि[४] समुद्र एव ।

---

२ या- । ३-थे । ४ द्वे, द्वै । ५ नास्ति । ६ नि- । ७ ने एव । ८ ओ । ९ अक्षरं ........वाचं तर्पयति यह पाठ नहीं । १०-यन्ति । ११ वार्कस् । १२ गायति ।

१ इद् (!) । २ सुदिते । ३ र्येवं । ४ तरणी ।

तद्यत्समुद्रेण परिगृहीतं तन्मृत्योराप्तमथ यत्परं तदमृतम् ॥३॥ स यो ह स समुद्रो य एवायम्पवत एष एव स समुद्रः । एतं हि संद्रवन्तं[6] सर्वाणि भूतान्यनुसंद्रवन्ति[7] ॥४॥ तस्य[8] द्यावापृथिवी एव रोधसी । अथ यथा नद्यां[9] कंसानि[10] वा महीणानि[11] स्युस्सरांसि वैव मस्यायम्पार्थिवस्समुद्रः[12] ॥५॥ स एष पार एव समुद्रस्योदेति । स उपरैव वायोः पृष्ठ आक्रमते । सोऽमृतादेवोदेति । अमृतमनुसंचरति । अमृते प्रतिष्ठितः[13] ॥६॥ तस्यैतत्त्रिरूपम्भसोरनाप्तं शुक्लं कृष्णम्पुरुषः ॥७॥ तद्यच्छुक्लं तद्वाचोरूपमृचोऽग्नेर्मृत्योः । सा या सा[14] वागृक्[15] सा । अथ योऽग्निर्मृत्युस्सः ॥८॥ अथ यत्कृष्णं तदपां रूपमन्नस्य[16] मनसोयजुषः । तद्यास्ता[17] आपोऽन्नं तत् । अथ यन्मनो यजुरेव ॥९॥ अथ यः पुरुषस्स प्राणस्तत्साम-तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥१०॥ १।२५॥

अष्टमेऽनुवाके प्रथमः खण्डः ।

अथाध्यात्मम् । इदमेव चक्षुस्त्रिवच्छुक्लं कृष्णम्पुरुषः ॥१॥ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । सा या सा वागृक्[1] सा[2] ।

---

५-गृयह-। ६-द्रे-। ७ अनुद्र-। ८-या। ६-याम। १० कसानि। ११ प्रहीणाद्वानि। १२ अधिक है 'सस्'. स। १३ प्रतिनिष्ठत'। १४ याक्ग्, याग्ग्। १५ अत्। १६ अन्नमस्य। १७ नास्ति, तथा.-यः पुरुषस्॥ १ गृत्। २ अधिक 'ऽक्सा'।

अथ योऽग्निर्मृत्युस्सः ॥२॥ अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः[३] । तद्यास्ता आपोऽन्नं तत् । अथ यन्मनो यजुष्टत् ॥३॥ अथ यः[४] पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥४॥ सैऽषोऽत्क्रान्तिर्ब्रह्मणः । अथातः पराक्रान्तिः ॥५॥ सा या सो[५]ऽऽक्रान्तिर्विद्युदेव सा । स यदेव विद्युतो विद्योतमानायै श्येतं[६] रूपम्भवति तद्वाचो रूपमृचोऽग्नेर्मृत्योः ॥६॥ यद्धेव विद्युतस्संद्रवन्त्यै नीलं[७] रूपम्भवति तदपां रूपमन्नस्य मनसो यजुषः[८] ॥७॥ य एवैष विद्युति पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम[९] । अथ यद्ब्रह्म तदमृतम् ॥८॥ ९।२६॥

अष्टमेऽनुवाके द्वितीय खण्ड. ।

स हैषोऽमृतेन परिवृतो मृत्युमध्यास्तेऽन्नं कृत्वा ॥१॥ अथैऽष एव पुरुषो योऽयं चक्षुषि[१] । य आदित्ये[२] सोऽतिपुरुषः । यो विद्युति स परमपुरुषः ॥२॥ एते ह वाव त्रयः पुरुषाः[३] । आ हास्यैते जायन्ते ॥३॥ स योऽयं चक्षुष्येषोऽनुरूपो नाम । अन्वङ्[४] ह्येष[५]

---

३-षो । स्तु (!) । ४-द्द । ५ नास्ति । ६ श्वैतं । ७-द्र्- । ८-दे । ९-मा ।

१-षी । २-यो । ३-षो,-षा,-ष । ४-वञ्च । ५ हृ ।

सर्वाणि रूपाणि । तमनुरूप इत्युपासीत । अन्वञ्चो[६] हैनं[७] सर्वाणि रूपाणि भवन्ति ॥४॥ य आदर्शे स प्रतिरूपः । प्रत्यङ् ह्येष सर्वाणि रूपाणि । तम्प्रतिरूप इत्युपासीत । प्रत्यञ्चो[८] हैनं सर्वाणि रूपाणि भवन्ति ॥५॥ यो विद्युति स सर्वरूपः । सर्वाणि[९] ह्येतस्मिन् रूपाणि । तं[१०] सर्वरूप इत्युपासीत । सर्वाणि हाऽस्मिन् रूपाणि[११] भवन्ति ॥६॥ एते ह वाव त्रयः पुरुषाः । आ हाऽस्यैते जायन्ते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥७॥ १।२७॥

अष्टमेऽनुवाके तृतीयः खण्डः । अष्टमोऽनुवाकः समाप्तः ।

---

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥१॥ स यस्स आकाश इन्द्र एव सः । स यस्स इन्द्र एष एव स य एष एव[१] तपति । स एष शतरश्मिर्भूत्वा ... ॥२॥ तस्य वाङ्मयो रश्मिः प्राङ् प्रतिष्ठितः । सा वा सा वागिति ... । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधा[२] न्यर्बुदधा निखर्वधा[३] पद्मधाक्षितिधा[४] व्योमान्तधा[५] ॥ ३ ॥ स एष एतस्य रश्मयो-

---

६–न्वञ्चो,–न्वञ्चो,–ध । ७ हैनम् । ८ प्रत्यं । ९ धाविक हि 'रूपाणि,' नास्ति–नां .. ..... रूपाणि ।

१ नास्ति । २ अर्–। ३ निखर्वाञ्च । ४–ति । ५–स, व्योम–।

म्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च वदत्येतस्यैव[6]
रश्मिना वदति[7] ॥४॥ अथ[8] मनोमयो दक्षिणा[9] प्रतिष्ठितः । तद्य-
त्तन्मनश्चन्द्रमास्सः[10] । स दशधा भवति ॥५॥ स एष एतस्य रश्मिर्मनो
भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च मनुत एतस्यैव
रश्मिना मनुते ॥६॥ अथ चक्षुर्मयः[11] प्रत्यङ्[12] प्रतिष्ठितः[13] । तद्यत्तच्चक्षु[14]-
रादित्यस्सः । स दशधा भवति ॥७॥ स एष एतस्य रश्मिश्चक्षु-
र्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च पश्यत्येतस्यैव
रश्मिना पश्यति ॥८॥ अथ श्रोत्रमय उदङ् प्रतिष्ठितः[15] । तद्यत्तच्छ्रोत्रं
दिशस्ताः । स दशधा भवति ॥९॥ स एष एतस्य रश्मिश्श्रोत्र-
म्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च शृणोत्येतस्यैव
रश्मिना शृणोति ॥१०॥ १।२८॥

नवमेऽनुवाके प्रथमः खण्डः ।

अथ प्राणमय ऊर्ध्वः प्रतिष्ठितः[1] । स यस्स प्राणो वायुस्सः ।
स[2] दशधा भवति ॥१॥ स एष एतस्य रश्मिः प्राणो भूत्वा सर्वास्वासु
प्रजासु प्रत्यवस्थितः । स यः कश्च प्राणित्येतस्यैव रश्मिना प्राणिति

---

६ पश्यति । ७ पश्यति । ८ नास्ति । ९ दक्षिणा । १० मन्यद् ।
११ चक्षुम- । १२-य । १३ वस्थित । १४ त, नास्ति । १५ प्रत्यवस्थित ॥

१-स्य- । २ नास्ति ।

॥२॥ अथाऽमुमयास्तिर्यङ् प्रतिष्ठितः । स ह[3] स ईशानो नाम । स दशधा भवति[4] ॥३॥ स एष एतस्य रश्मिरमुर्भूत्वा सर्वास्वासु प्रजासु प्रसवास्थितः । स यः कश्चाऽमुमानेतस्यैव रश्मिनाऽमुमान् ॥४॥ अथाऽन्नमयोऽर्वाङ् प्रतिष्ठितः । तद्यत्[5]तदन्न[6]मापस्ताः[7] । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधान्यर्बुदधा निखर्वधा[8] पद्मधाक्षितिर्व्योमान्तः[9] ॥५॥ स एष एतस्य रश्मिरन्नम्भूत्वा सर्वास्वासु[10] प्रजासु प्रसवास्थितः । स यः कश्चाश्नात्येतस्यैव रश्मिना-श्नाति ॥६॥ स एष सप्तरश्मिर्वृषभस्तुविष्मान् । तदे[11]तदृचाऽभ्यनूच्यते

यस्सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्तसिन्धून् ।
योरौहि[12]णमस्फुरद्वज्रबाहुर्द्यो[13]मारोहन्तं[14] स जनास इंद्र इति

॥७॥ यस्सप्तरश्मिरिति । सप्त ह्येत आदित्यस्य रश्मयः । वृषभ इति । एष ह्येवाऽऽसां प्रजानामृषभः । तुविष्मानिति । महीये[15]ऽवा स्यैषा ॥८॥ अवासृजत् सर्तवै सप्तसिन्धूनिति । सप्तयेनेसिन्धवः ।

---

३ स्थान खाली है 'स····  ई' । ४-यन्ति । ५ 'यत्' के पश्चात् 'ततत्तुदं नाम' पाठ है, 'नदश्नम···· स' नहीं है । ६ चैंदश्नम । ७ तेदा, प्न । ८ निम्वर्वांचम, निमर्वंधाच । ९ पं मन- १० सामास्व् ११ नास्ति तदेनद् ·· वृषभस्तुविष्मान् । १२ रोहन १३-ह्रु । १४-न । १५ महृये ।

तैरिदं सर्वं सितम् । यद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः ॥८॥ यो रौहिणमस्फुरद्वज्रबाहुरिति । एष (हि) रौहिणमस्फुरद्वज्रबाहुः ॥१०॥ द्यामारोहन्तं[१६] स जनास इन्द्र इति । एष हीन्द्रः ॥११॥ १।२८॥

नवमेऽनुवाके द्वितीयः खण्ड[१]।

तद्यथा गिरिम्पन्थानस्समुद्दिशुरिति हस्माऽऽह शाट्यायनि- रेयमेत आदित्यस्य रश्मय एतमादित्यं सर्वतोऽपियन्ति[२] । स हैवं विद्वानोमित्याददान एतैरेतस्य रश्मिभिरेतमादित्यं सर्वतोऽप्येति॥१॥ तदेतत् सर्वतो द्वारमनिपेधं[३] साम । अन्यतोद्वारं[४] हैऽनदेकं[५] एवा- ऽभ्रङ्गमुपासते[६] । अतोऽन्यथा[७]विदुः ॥२॥ अथ य एतदेवं वेद स एवैतत् सर्वतो द्वारमनिपेधं सामवेद ॥३॥ सा एषा विद्युत् । (यद्) एतन्मण्डलं समन्तम्परिपतति तत्साम । अथ यत्परमतिभाति स पुण्यकृत्साये रसः । तमभ्यतिमुच्यते ॥४॥ तदेतदभ्रातृव्यं[११] साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव न कंचन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥५॥ १।३०॥

नवमेऽनुवाके तृतीयः खण्डः । नवमोऽनुवाकस्समाप्तः ।

---

१६ स्थान खाली है-हन्-थाला,-हन्तं ।

१ पचम । २ तिप्रतिवियन्ति । ३ अनुप्- । ४ नास्ति । ५ नत, त । ६ नास्ति । ७ पनाव, पना । ८ गम्... । ९ पतो । १० विदु । ११-र्त्वि ॥

अयमेवेदमग्र आकाश आसीत् । स उ एवाऽप्येतर्हि । स यस्स आकाश[२] इन्द्र एव सः । स यस्स इन्द्रस्सामैवतद् ॥१॥ तस्यैतस्य साम्न इयमेव प्राचीदिग्घिङ्[१]कार इयम्प्रस्ताव इदमादिरियमुद्गीथोऽसौ प्रतिहारोऽन्तरिक्ष[२]मुपद्रव इयमेवनिधनम् ॥२॥ तदेतत्सप्त[३]विधं साम । स य एवमेतत्सप्तविधं साम वेद यस्किञ्च प्राच्यांदिशि या[४] देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं[५] हिङ्कारेणाप्नोति[६] ॥३॥ अथ यद्दक्षिणायां दिशि तत्सर्वं प्रस्तावेनाप्नोति ॥ ४ ॥ अथ यत्[७]प्रतीच्यां दिशि तत्सर्वमादिनाप्नोति ॥५॥ अथ यदुदीच्यांदिशि तत्सर्वमुद्गीथेनाप्नोति ॥६॥ अथ यद[८]मुष्यां दिशि तत्सर्वम्प्रतिहारेणाप्नोति ॥७॥ अथ यदन्तरिक्षे[६] तत्सर्वमुपद्रवेणाप्नोति ॥८॥ अथ यदस्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं निधनेनाप्नोति ॥९॥ सर्वं हैवाऽस्याऽऽप्तम्भवति सर्वं जितं न हाऽस्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥१०॥ स यद्वकिञ्च किञ्चैवं विद्वानेषु लोकेषु कुरुते स्वस्य हैव तत्स्वतः कुरुते । तदेतदृचाऽभ्यनूच्यते ॥११॥ १।३१॥

दशमेऽनुवाके प्रथम खण्डः ।

---

१ दार् । २-रिक्षं । ३ पत् । ४ 'मनुष्या' अधिक है । ५-वा । ६ यहां चौथा श्लोक (मन्त्र) अधिक है और माय की प्रतिहारेण 'प्रस्तावेन' के स्थान में । ७ 'प्रच्यात्' अधिक है । ८ 'दक्षिणायांदिशि' ॥

यद् द्याव इन्द्र ते शतं[1] शतम्भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या[2] अनु न[2] जातमष्ट रोदसी इति ॥१॥

यद् द्याव इन्द्र ते शतं शतम्भूमीरुत स्युरिति । यच्छतं द्यावस्स्युश्शत-म्भूम्यस्ताभ्य एष एवाऽऽकाशो ज्यायान्[4] ॥२॥ न त्वा वज्रिन्त्सहस्रं सूर्या अन्विति । न ह्येतं सहस्रं चन सूर्या अनु ॥३॥ न[3] जातमष्ट रोदसी इति । न ह्येतं जातं रोदन्ति । इमे ह वाव रोदसी ताभ्या-मेष एवाकाशो ज्यायान् । एतस्मिन् ह्येवैते अन्तः ॥४॥ स यस्स आकाश इन्द्र एव सः । स[5] यस्स इन्द्र एष एव स य एष तपति ॥५॥ स एषोऽभ्रारयतिमुच्यमान[6] एति[7] । तद्यथैषोऽभ्रारयतिमुच्यमान[6] एवेवमेव स सर्वस्मात्पाप्मनोऽतिमुच्यमान एति य एवं वेदाथो यस्यैवं विद्वानुद्गायति ॥६॥ १।३७॥

दशमेऽनुवाके द्वितीय खण्ड । दशमोऽनुवाकस्समाप्त ।

---

त्रिरुत्सृतं चतुर्णाम् । ब्रह्म तृतीयमिन्द्रस्तृतीयं[1] प्रजापति-स्तृतीयमक्षरं[1] चतुर्थः पादः ॥१॥ तद्वै ब्रह्मसमाप्तोऽथ य इन्द्र-

---

१ नास्ति । २–या । ३ नास्ति । ४–यन् । ५ नास्ति, स—स ।
६ स्थान खाली 'य' तक । ७–मानय्,–यमानर ॥

स्सा वागथ यः प्रजापतिस्तन्मनोऽन्नमेव चतुर्थः पादः ॥२॥ मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथोऽन्नमेव चतुर्थः पादः ॥३॥ करोत्येव वाचा नयति प्राणेन गमयति मनसा। तद्देवाग्निरर्द्धं यन्मनः। तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ॥४॥ अथाधिदैवतम्। चन्द्रमा एव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथ आप एव चतुर्थः पादः। तद्धि मत्स्यमन्नम् ॥५॥ ता वा एता देवता अमावास्यां रात्रिं संयन्ति। चन्द्रमा अमावास्यां रात्रिमादित्यम्प्रविशत्यादित्योऽग्निम् ॥ ६ ॥ तद्यत्संयन्ति तस्मात्साम। स ह वै सामवित्स साम वेद य एवं वेद ॥७॥ तासां वा एतासां देवतानामेकैकैव देवता साम भवति ॥८॥ एष एवादित्यस्त्रिवृच्चतुष्पाद्रश्मयो मण्डलम्पुरुषः। रश्मय एव हिङ्कारः। तस्मात्ते प्रथमत एवोद्यतन्तायन्ते। मण्डलम्प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तस्स एव चतुर्थः पादः ॥९॥ एवमेव चन्द्रमसो रश्मयो मण्डलम्पुरुषः। रश्मय एव हिङ्कारो मण्डलम्प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तस्स एव चतुर्थः पादः ॥१०॥ चत्वार्यन्यानि चत्वार्यन्यानि। तान्यष्टौ। अष्टाक्षरा गायत्री गायत्रं साम ब्रह्म उ गायत्री। तदु ब्रह्माऽभिसम्पद्यते। अष्टाशफाः पशवस्तेनोपपशव्यम् ॥११॥ ११३३॥

पञ्चादशोऽनुवाके प्रथमः खण्डः।

---

२-दैवत-। ३-अम। ४-मा। ५-सय-। ६-सं। ७-नाग्निः। ८-उद्य। ९-श्री,त्रं॥

अथाऽध्यात्मम्।इदमेव चतुस्त्रिंशच्चतुष्पाच्छुक्लं कृष्णम्पुरुषः। शुक्लमेव हिङ्कारः कृष्णम्प्रस्तावः पुरुष उद्गीथो या इमा आपोऽन्तस्स एव चतुर्थः पादः॥१॥इदमादित्यस्यायनमिदं चन्द्रमसः। चत्वारीमानि चत्वारीमानि ।तान्यष्टौ। अष्टाक्षरा गायत्री। गायत्रं साम ब्रह्म उ गायत्री । तद्ब्रह्माभिसम्पद्यते[३] ।अष्टाशफाः पशवस्तेनो पशव्यम्॥२॥ स यो ऽयम्पवते[२] स एष एव[२] प्रजापतिः । तदेव साम। तस्यायं देवो योऽयं चक्षुषि पुरुषः । स एष आहुतिमतिमसोत्क्रान्तः॥३॥ अथ यावेतौ चन्द्रमाश्चादित्यश्च यावेतावप्सु दृश्येते[३] एतावेतयोर्देवौ[४]॥४॥ यद्वा इदमाहुर्देवानां देवा इत्येते ह ते। त एत आहुतिमतिमसोत्क्रान्ताः ॥५॥ तद्ध प्रथुर्वैन्यो दिव्यान्व्रात्यानप्रच्छ[५] येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशस्समीचीः[७] । य आहुतीरत्यमन्यन्त[८] देवा[९] अपां[१०] नेतारः कतमे त आसन्निति॥६॥ ते ह प्रत्यूचु रिमामेषाम्पृथिवीं वस्त एकोऽन्तरिक्षम्पर्येको[११] बभूव। दिवमेको ददते यो विधर्ता[१३] विश्वा आशाः प्रतिरक्षन्त्यन्य[१२] इति॥७॥ इमामेषाम्पृथिवीं

---

१-पाद्-। २ नास्ति । ३-यते। ४ एता उ । ५ तान्। ६ यभिर्। ७ दशास्, दश। ८-ईर्। ९ इत्यम-। १० पराद्। ११-ईच्-। १२-क्षता। १३ अन्य्।

वस्त एक इत्यभिर्दसः ॥८॥ अन्तरिक्षम्[११]पर्येको बभूवेति वायुर्ह सः ॥९॥ दिवमेको ददते यो विधर्ता[१५]ऽऽदित्यो ह सः ॥१०॥ विश्वा आशाः प्रतिरक्षन्त्यन्य इति । एता ह वै देवता विश्वा आशाः प्रतिरक्षन्ति चन्द्रमा नक्षत्राणीति । ता एतास्सामैव सत्सो व्यूढोऽऽसाय ॥११॥ १ । ३४ ॥

एकादशोऽनुवाके द्वितीयः खण्डः । एकादशोऽनुवाकस्समाप्तः ।

---:o:---

अथैतत्साम । तदाहुस्संवत्सर एव सामेति ॥१॥ तस्य वसन्त एव हिङ्कारः । तस्मात्पशवो वसन्ता हिङ्कुरिक्र[१]तस्समुदायन्ति ॥२॥ ग्रीष्मः प्रस्तावः । अनिरुक्तो वै प्रस्तावोऽनिरुक्त ऋतूनां ग्रीष्मः ॥३॥ वर्षा उद्गीथः । उदिव वै वर्षं गायति ॥४॥ शरत्प्रतिहारः । शरदि ह खलु वै भूयिष्ठा ओषधयः पच्यन्ते ॥५॥ हेमन्तो निधनम् । निधनकृता इव वै हैमन्तना भवन्ति ॥६॥ तावेतावन्तौ संधत्तः । एतदन्व[२]नन्तस्[३]संवत्सरः[४] । तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च । एतदनु ग्रामस्यान्तौ समेतः । एतदनु निष्कस्यान्तौ समेतः । एतदन्वहिर्भोगान्पर्याहसन्ये ॥७॥ तद्यथा ह वै निष्कस्समन्तं ग्रीवा[५] अभिपर्यक्त[६]

---

१४ विधर्त्ते, विधत्ते । १५ अन्‌-, 'न्तु-'-याया ।

१-करिर्कुनस्र,-करिक्रतस् । २ नानि । ३-तत । ४ सवत्-न ५ थी-न ६-यत्त ।

एवमनन्तं साम । स य एवमेतदनन्तं साम वेदानन्ततामेव जयति ॥८॥ १।३५॥

द्वादशोऽनुवाके प्रथम- खण्डः ।

अथैतत्पर्जन्ये साम । तस्य पुरोवात एव हिङ्कारः । अथ यदभ्राणि सम्प्लावयति स प्रस्तावः। अथ यत् स्तनयति स उद्गीथः । अथ यद्विद्योतते स प्रतिहारः । अथ यद्वर्षति तन्निधनम् ॥१॥ तदेतत्पर्जन्ये साम । स य एवमेतत्पर्जन्ये साम वेद वर्षुको हास्मै पर्जन्यो भवति ॥२॥ अथैतत् पुरुषे साम । तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनम् ॥३॥ तदेतत्पुरुषे साम । स य एवमेतत्पुरुषे साम वेदोऽऽर्ध्व एव प्रजया पशुभिरारोहत्येति ॥४॥ स उ एनत्प्रसम्वेद ये प्रसञ्चो लोकास्ताञ्जयति । तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनम् । ये प्रसञ्चो लोकास्ताञ्जयति ॥५॥ य उ एनत्तिर्यग्वेद ये तिर्यञ्चो लोकास्ताञ्जयति।तस्य लोमैव हिङ्कारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जानिधनम्॥६॥ तस्य त्रीण्याविर्गायति प्रस्तावम्प्रतिहारं

---

७ ऽनन्ताम् ।

१-पण्-।२-पो । ३ प्रजा । ४-नं । ५ नास्ति । ६ एन, एनं । ७-ञ्चु-, 'म' अधिक है । ८ लाक्-।९ हिंकारं ॥

निधनम् । तस्मात्पुरुषस्य त्रीण्यस्थीन्याविर्दन्ताश्च द्रयाश्चनखाः । ये तिर्यञ्चो लोकास्ताञ्जयति ॥७॥ य उ एनत्संयग्वेद ये सम्यञ्चो लोकास्ताञ्जयति । तस्य मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथश्चक्षुः प्रतिहार श्श्रोत्रं निधनम् । ये सम्यञ्चो लोकास्ताञ्जयति ॥८॥ अथैतद्देवतासु साम । तस्य वायुरेव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथश्चन्द्रमा प्रतिहारो दिश एव निधनम् ॥९॥ तदेतद्देवतासु साम । स य एवमेतद्देवतासु साम वेद देवतानामेव सलोकतां जयति ॥१०॥ १।३६॥

द्वादशोऽनुवाके द्वितीय खण्ड ।

तस्यैतास्तिस्र आगा आग्नेय्यैन्द्र्[1]येका[2] वैश्वदेव्येका ॥१॥ सा या मन्द्रा[3] साऽऽग्नेयी[4] । तया प्रातस्सवनस्योद्गेयम् । आग्नेयं वै प्रातस्सवनमाग्नेयोऽयं लोकः। स्वयाऽऽगया प्रातस्सवनस्योऽद्गायत्यृध्नोतीमं लोकम् ॥२॥ अथ[5] या घोषिण्युपब्दिमती[6] सैऽऽन्द्री । तया माध्यन्दिनस्य[7] सवनस्योद्गेयम् । ऐन्द्रं वै माध्यन्दिनं सवनं मैन्द्रोऽसौ लोकः । स्वयाऽऽगया माध्यन्दिनस्य सवनस्योद्गायत्यृध्नोत्यमुं[8] लोकम् ॥३॥ अथ यां[9] वीङ्खयन्निव मथयन्निव गायति सा वैश्वदेवी । तया

---

१ येष्- । २ ऽन्द्र । ३ नास्ति, सा..............ऽद् । ४ मैनधी । ५ नास्ति अथ..............घोषकम । ६-अन्द्री-के लिये स्थान खाली है। ७-न्दिन । ८-निध्रमं । ९ या, ' घोषिण्यु ', भी लिखा है ।

तृतीयसवनस्योद्गेयम्। वैश्वदेवं वै तृतीयसवनं वैश्वदेवोऽयमन्तरालोकः। स्वयाऽऽगया तृतीयसवनस्योद्गायत्[१०]पृप्नोतीममन्तरालोकम् ॥४॥ अथो उच्चा खल्वाहु रेकैयवाऽऽगयोद्गेयं यदेवास्य मध्यं वाच इति। तद्यया वै वाचा व्यायच्छमान उद्गायति तदेवास्यमध्यं वाचः। तया[११] वा एतया वाचा सर्वा वाच उपगच्छति। अन्यासिक्तामेकस्थां श्रियमृप्नोति य एवं वेद ॥५॥ अथ या क्रौञ्चा सा बार्हस्पत्या। स यो ब्रह्मवर्चसकामस्स्यात्[१२]स तयोद्गायेत्। तद्ब्रह्म वै बृहस्पतिः। तद्वै ब्रह्मवर्चसमृप्नोति तथा ह ब्रह्मवर्चसीभवति ॥६॥ अथ ह चैकितानेय एकस्यैव साम्न आगां गायति गायत्रस्यैव। तदनवानं गेयम्[१३]। तत्[१४]साम्न एवा प्रतिहारादनवानं गेयम्। तत्प्राणो वै गायत्रम्। तद्वै प्राणमृप्नोति। तथा ह सर्वमायुरेति ॥७॥ १।३७॥

द्वादशोऽनुवाके तृतीयः खण्डः।

अथ ह ब्रह्मदत्तं[१] चैकितानेयमुद्गायन्तं कुरव उपोदुरुज्जहिहि[२] साम दाल्भ्येऽति ॥१॥ स होऽपोद्यमानो नितरां जगौ। तं होचुः किमुपोद्यमानो नितरामगासीरिति ॥२॥ स होवाचेदं वै लोमेऽत्ये[३]-

१०–यन्ति। ११ तया। १२ स, नास्ति। १३ 'वै गायत्रम' नीचे से ले के अधिक लिखा है। १४ 'साम्नस' अधिक है॥

१ तत्। २ उज्जिहि। ३ सोमे।

तद्देवतमस्तुपस्थ्यम्[4] । तस्माद्द ये न एतदुपात्वादिपुलोमशानीऽव तेषां श्मशानानि भवितारः । अथ वयमुदेव गातारस्स्म[6] इति ॥३॥ अथ ह राजा जैवलिर्गल्नूनसमार्त्ताकायण[7] शामूल पर्णाभ्यामुत्थितम्पम-च्छर्चाऽऽगाता शालावत्सा३ साम्ना३ इति ॥४॥ नैव राजन्नृचेति होवाच न साम्नेऽति । तद्यूय तर्हि सर्वे एव पर्णाभ्यां[9] भविष्यथ य एव विद्वाँसोऽगायतेति॥५॥ अथ यद्वाऽत्र स्वयदृचा च साम्ना चाऽऽगामे-[10]ति धीतेन वै तद्यातयाम्नाऽम्लाकारडेनाऽगातेऽति हैनाँस्तदवचयन्। तद्ध तदुवाच स्वरेण चैव हिङ्कारेण चाऽऽगामेति ॥६॥ ११२८॥

द्वादशोऽनुवाके चतुर्थं खण्ड ।

अथ ह सत्याधिवाकश्चैत्ररथिस्सत्ययज्ञम्पौलुषितमुवाच प्राचीन-योगेति सम[1] चेद्वै त्व साम विद्वान् साम्नाऽऽर्त्विज्य करिष्यसि नैव तर्हि पुनर्दीक्षामभिध्यातासीति । मुहुर्दीक्षी[2] ह्यास[3] ॥१॥ स होवाच यो वै साम्नश्श्रियं विद्वान्साम्नाऽऽर्त्विज्यं करोति श्रीमानेव भवति । मनो वाव साम्नश्श्रीरिति ॥२॥ यो वै साम्नः प्रतिष्ठां विद्वान्साम्ना-ऽऽर्त्विज्य करोति प्रत्येव तिष्ठति । वाग्वाव साम्नः प्रतिष्ठेति ॥३॥

---

४-उपाद्-। ५-पुल् । ६-तार । ७ गल्नूनसम, गुल्निनसम । ८-त । ९ पर्णाभ्यां । १० च आगमे ॥

१ मच । २-क्षी । ३ आ ।

यो वै साम्नस्सुवर्णं विद्वान् साम्नाऽऽर्त्विज्यं करोत्यध्यस्य गृहे[४] सुवर्णं गम्यते । प्राणो वाव साम्नस्सुवर्णमिति ॥४॥ यो वै साम्नोऽपचितिं विद्वान्साम्नाऽऽर्त्विज्यं करोत्यपचितिमानेव भवति । चक्षुर्वाव साम्नोऽपचितिरिति ॥५॥ यो वै साम्नश्श्रुतिं विद्वान्साम्नाऽऽर्त्विज्यं करोति श्रुतिमानेव भवति । श्रोत्रं वाव साम्नश्श्रुतिरिति ॥६॥ २।३-६॥

द्वादशोऽनुवाके पञ्चमः खण्डः । द्वादशोऽनुवाकस्समाप्तः ।

---

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा[१] त्रीणि निहिता[२] नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीऽति ॥ १ ॥

वागेव साम । वाचा हि साम गायति । वागेवोऽक्थम्[३] । वाचा ह्युक्थं[४] शंसति । वागेव यजुः । वाचा[५] हि यजुरनुवर्तते ॥२॥ तद्यत्किंचार्वाचीनम्ब्रह्मणस्तद्वागेव सर्वम् । अथ यदन्यत्र ब्रह्मोपदिश्यते । नैव[६] हि तेनाऽऽर्त्विज्यं करोति । परोक्षेणैव तु[७] कृतम्भवति ॥३॥

---

४-ह्यो ।

१-हानि । २-हितानी । ३ नास्ति । ४-क्-। ५ घाचं । ६ ने ।
७ नास्ति ।

तस्या एतस्यै वाचो मनः पादश्चक्षुः[8] पादश्श्रोत्रम्पादो[9] वागेव चतुर्थः पादः ॥४॥ तद्यद्वै मनसा ध्यायति तद्वाचा वदति । यच्चक्षुषा पश्यति तद्वाचा वदति । यच्छ्रोत्रेण शृणोति[10] तद्वाचा वदति ॥५॥ तद्यदेतत्सर्वं वाचमेवाऽभिसमयति[11] तस्माद्वागेव साम । स ह वै सामवित्स साम वेद य एवं वेद ॥६॥ तस्या एतस्यै वाचः प्राणो[12] एवाऽसुः । एषु हीदं सर्वममृतेति[13] ॥७॥ १।४०॥

त्रयोदशोऽनुवाके प्रथमः खण्डः ।

तेन हैतेनाऽमुना देवा जीवन्ति[1] पितरो जीवन्ति मनुष्या जीवन्ति पशवो जीवन्ति गन्धर्वाप्सरसो जीवन्ति सर्वमिदं जीवति ॥१॥ तदाहुर्यद[2]मुने[3]दं सर्वं[4] जीवति कस्साम्नोऽसुरिति । प्राण इति ब्रूयात् । प्राणो ह वाव साम्नोऽसुः ॥२॥ स एष प्राणो वाचि प्रतिष्ठितो वाक् प्राणे प्रतिष्ठिता । तावेतावेवमन्यो[5]ऽन्यस्मिन्प्रतिष्ठितौ । प्रतितिष्ठति[6] य एवं वेद ॥३॥ तदेतदृचाऽभ्यनूच्यते—

---

८ 'चतुर्थं' अधिक है । ९ स्वाद् । १० शृणोति । ११ ऽभिसमे– । १२ –णा । १३ 'असुते' के परे 'एषु ह्योऽयं सर्वं सुनेऽति' सब में लिखा है ( नास्ति 'ति ) ॥

१ –न्तीऽति । २ यश । ३ येने । ४ 'इदं' अधिक है । ५ –ये । ६ मन्यस्– । ७ प्रतिष्ठितः ।

अदितिर्द्यौरदितिरन्तरिक्ष[8]मदितिर्माता[9] स पिता स पुत्रः । विश्वे देवा अदितिः पञ्चजना[10] अदितिर्जातमदितिर्जनित्वम् ॥ इति ॥४॥

अदितिर्द्यौरदितिरन्तरिक्ष[8]मिति । एषा[11] वै द्यौरेषा[11]ऽन्तरिक्षम् ॥५॥ अदितिर्माता स पिता स पुत्र इति । एषा वै[12] मातैषा पितैषा पुत्रः ॥६॥ विश्वेदेवा अदितिः पञ्चजना इति । येदेवा असुरेभ्यः पूर्वे पञ्चजना आसन् य एवासावादित्ये पुरुषो यश्चन्द्रमसि यो विद्युति योऽप्सु योऽयमक्ष[13]ण्यन्तरेष एव ते । तदेषैव ॥७॥ अदितिर्जातमदितिर्[14]जनित्वमिति । एषा ह्येव जातमेषा जनित्वम् ॥८॥१.४१॥

त्रयोदशोऽनुवाके द्वितीयः खण्डः । त्रयोदशोऽनुवाकस्समाप्तः ।

———— ० ————

आरुणिर्ह वासिष्ठं चैकितानेयम्ब्रह्मचर्यमुपेयाय । तं होवाचाऽजानासि[1] सौम्य गौतम यदिदं वयं[2] चैकितानेयास्सामैवोपास्महे[3] । कां त्वं देवतामुपास्स[4] इति । सामैव भगवन्त[5] इति होवाच ॥१॥ तं[6] ह पप्रच्छ यदग्नौ तद्वेत्था३ इति । ज्योतिर्वा एतदस्य साम्नो यद्रूपं

८—रीक्सद्— । ९ नास्ति, अदितिर्माता······ अदितिरन्तरिक्षम् ।
१०—चँ । ११—षो । १२—वैद् । १३—यम । १४ इतिद्, इति ॥
१ (वाचा) आज । २ यं । ३—माह—इति । ४—स्स नहीं । ५—वत । ६ ता ।

सामोऽपास्मह इति ॥७॥ यत्पृथिव्या तद्वेत्था३ इति । प्रतिष्ठा वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥३॥ यदप्सु तद्वेत्था३ इति । शान्तिर्वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥४॥ यदन्तरिक्षे तद्वेत्था३ इति । आत्मा वा एष तस्य साम्नो यद्वय सामोपास्मह इति ॥५॥ यद्वायो तद्वेत्था३ इति । श्रीर्वा एषा तस्य साम्नो यद्वय सामोऽपास्मह इति ॥६॥ यद्दिक्षु तद्वेत्था३ इति । व्याप्तिर्वा एषा तस्य साम्नो[10] यद्वय सामोपास्मह इति[11] ॥७॥ यद्दिवि तद्वेत्था३ इति । विभूतिर्वा एषा[12] तस्य साम्नो यद् वय सामोपा-स्मह[12] इति ॥८॥ १।८२॥

चतुर्दशोऽनुवाके प्रथम खण्ड ।

यदादित्ये तद्वेत्था३ इति । तेजो वा एतत्तस्य साम्नो यद्वय सामोपास्मह इति ॥१॥ यचन्द्रमसि तद्वेत्था३ इति । भा वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥२॥ यन्नक्षत्रेषु तद्वेत्था३ इति । प्रज्ञा[2] वा एषा तस्य[1] साम्नो यद्वय सामोपास्मह इति ॥३॥ यदन्ने तद्वेत्था३ इति। रेतो वा एतत्तस्य[3] साम्नो यद्वयसामोपास्मह

---

७ हाशिया पर लिखा है । ८ एतस्य । ९ नास्ति यद् इति । १० नास्ति साम्नो ऽप । ११–हा । १२ नास्ति प स्मह ॥

१ नास्ति । २ प्रजा । ३ नास्ति, 'एतत्' में 'तत्' ।

इति ॥४॥ यत्[4]पक्षुपु तद्वेस्था३ इति । यशो वा एतत्तस्य[5] साम्नो यद्वय सामोपास्मह इति ॥५॥ यद्वचि तद्वेस्था३ इति । स्तोमो[6] वा एष तस्य[5] साम्नो यद्वयं सामोपास्मह इति ॥६॥ यद्यजुपि तद्वेस्था३ इति । कर्म वा एतत्तस्य[5] साम्नो यद्वयं सामोपास्मह इति ॥७॥ अथ किं उपास्स[7] इति । अक्षरमिति । कतमत्तदक्षरमिति । यत्क्षरन्नाऽक्षीयते- ति । कतमत्तत्[8] क्षरन्[9]नाऽक्षीयतेति । इन्द्र इति ॥८॥ कतमस्स इन्द्र इति । योऽक्षन्[10]रमत[11] इति । कतमस्स[12] यो[13]ऽक्षन्रमत इति । इयं देवतेति होवाच ॥९॥ योऽय चक्षु[14]पि पुरुष एष इन्द्र एष प्रजापतिः । (स) समः पृथिव्या सम आकाशेन समोदिवा समस्सर्वेण भूतेन । एष परो दिवो दीप्यते[15] । एष एवेदं सर्वमित्युपासित[16]व्यः ॥१०॥ स य एवमेव वेद ज्योतिष्मान् प्रतिष्ठावाञ्छ्रान्तिमानात्मवाञ्छ्रीमान् व्याप्तिमान् विभूतिमांस्तेजस्वी[17] भावान् प्रज्ञावाञ्चेतस्वी यशस्वी स्तोमवान्[18] कर्मवानक्षरवानिन्द्रियवान् सामन्वीभवति ॥११॥ तद्वे[19]- तदृचाऽभ्यनूच्यते ॥१२॥ ११८३॥

चतुर्दशमेऽनुवाके द्वितीय खण्ड ।

---

४ नास्ति । ५ यो । ६ स्ते– । ७ 'स्स' के लिये स्थान छोडा है । ८–द् । ९ अक्षरं । १०–च । ११ इन्द्रमत । १२ सो । १३ नास्ति । १४–र् । १५ दिव्य– । १६–सीतव्य । १७–वी । १८ स्तोमान् । १९ उद् ॥

रूपं-रूपम्प्रति रूपोबभूव तदस्य रूपम्प्रतिचक्षणाय।
इन्द्रोमायाभिः[1]पुरुरूप ईयते[2] युक्ता ह्यस्य हरयश्शतादश॥

इति ॥१॥ रूपं-रूपम्प्रतिरूपो बभूवेति । रूपं-रूपं ह्येष प्रतिरूपो बभूव ॥२॥ तदस्य रूपम्प्रतिचक्षणायेति । प्रतिचक्षणाय[3] ह्यस्यैतद्रूपम् ॥३॥ इन्द्रो मायाभिः पुरुरूप[4] ईयत[5] इति । मायाभिर्ह्येष एतत्पुरु रूप[5] ईयते[6] ॥४॥ युक्ता ह्यस्य हरयश्शता[7] दशेति । सहस्रं हैत आदित्यस्य रश्मयः । तेऽस्य युक्तास्तैरिदं सर्वं हरति । तद्यदेतैरिदं सर्वं हरति तस्माद्धरयः ॥५॥ रूपं रूपम्मघवा[8] बोभवीति

मायाः कृण्वानः परितन्वं स्वाम् । त्रिर्यद्दिवः परि मुहूर्तमागात्[1] स्वैर्मन्त्रैरनृतुपा ऋतावेति ॥६॥

रूपं-रूपम्मघवा बोभवीतीति[10] । रूपं-रूपं[11] ह्येष मघवा बोभवीति ॥७॥ मायाः कृण्वानः[12] परि तन्वं स्वामिति । मायाभि[13]र्ह्ये[14]ष एतत्स्वां[15] तनुं, गोपायति ॥८॥ त्रिर्यद्दिवः परिमुहूर्तमागादिति[16] । त्रिर्ह वा एष एतस्य मुहूर्तस्येमाम्पृथिवीं समन्तः पर्येतीमाः प्रजास्संचक्षाणः ॥९॥ स्वैर्मन्त्रैरनृतुपा[17] ऋतावेति । अनृतुपा ह्येष एतदृतावा[18] ॥१०॥२।४४

चतुर्दशोऽनुवाके तृतीय खण्डः ।

---

१ पुरुर इंप, पुरुरूपं । २ रम्यते । ३—ध्या । ४—पम । ५—पम । ६ रमीयते । ७ नास्ति, हरयश्......तेऽस्य । ८ 'म' अधिक है । ९ मुर्हू— १० नास्ति, इति । ११ पुनः लिखा है 'रूपंरूपं......वीत्तीप्रति (!) । १२ कृण्वा । १३—भि । १४ ह्य । १५ नास्ति । १६ यति । १७ नृत— १८ त्रावा ॥

तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ—

इन्द्रमुक्थमृचमुद्गीथमाहुर्ब्रह्म साम प्राणं व्यानम्[1] ।
मनो[2] या चक्षुरपानमाहुश्श्रोत्रं श्रोत्रिया बहुधावदन्ती-
ति ॥१॥ ते मत्यूचुः—

ऋषय एते मन्त्रकृत पुराजाः पुनराजायन्ते वेदानां गुप्त्यैकम् ।
ते वै विद्वांसो वैन्य तद्वदन्ति समानम्पुरुषम्बहुधा निविष्टम्, इति ॥२॥

इमां[4] ह वा तद्देवतां त्रय्यां[3] विद्यायामिमां समानाम[5]भ्येक[6] आप-
यन्ति नैके । यो ह वावैतद्देवं वेद स एवै[7]तां देवतां सम्प्रति वेद
॥३॥ स एष इन्द्र उद्गीथः । स यदै[8]ष इन्द्र उद्गीथ आगच्छति
नैवोद्गातुर्थोपगातॄणां च विज्ञायते[10] । इत एवोऽऽर्ध्व[11]स्स्वर[12]उदेति ।
स उपरि मूर्ध्नो लेलायति ॥४॥ स विद्यादगमदिन्द्रो नेह कश्चन
पाप्मा न्यङ्गः परिशे[13]क्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः
परिशिष्यते ॥५॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कंचन
भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव न कंचन
भ्रातृव्यम्पश्यते य एतदेवं वेदायो यस्यैवं विद्वानुद्गायति ॥६॥२।४५॥

चतुर्दशोऽनुवाके चतुर्थं [illegible] ।चतुर्दशोऽनुवाकस्समाप्तः ।

---

१–रुदम । २ नो । ३ अर्घ्या, ८–र्यां । ४ इमां । ५–ना । ६ भ्य् । ७ हवे ।
८ य घै । ९–दृन्– । १० 'ति' अधिककरो । ११ ध्वों । १२ स्वर । १३ परिपे– ।

प्रजापतिर्वा वेद अग्र आसीत् । सोऽकामयत बहुस्स्यात्प्रजायेय भूमानं गच्छेयमिति ॥१॥ स षोडशधाऽऽत्मानं व्यकुरुत भद्रं च समाप्तिश्चाऽऽभूतिश्च सम्भूतिश्च भूतं च सर्वं च रूपं चाऽपरिमितं च श्रीश्च यशश्च नाम चाऽग्रं च सजाताश्च पयश्च महीया च रसश्च ॥२॥ तद्यद्भद्रं हृदयमस्य तत् । ततस्संवत्सरमसृजत । तदस्य संवत्सरोऽनूपतिष्ठते ॥३॥ समाप्तिः कर्मास्य तत् । कर्मणा हि समाप्नोति । तत ऋतूनसृजत । तदस्यर्तवोऽनूपतिष्ठन्ते ॥४॥ आभूतिरन्नमस्य तद् । ( तच् ) चतुर्धा भवति । ततो मासानर्धमासानहोरात्राण्युषसोऽसृजत । तदस्य मासा अर्धमासा अहोरात्राण्युषसोऽनूपतिष्ठन्ते ॥५॥ सम्भूती रेतोऽस्य तद् । रेतसो हि सम्भवति ॥६॥ ११४६॥

पञ्चदशोऽनुवाके प्रथम खण्ड ।

ततश्चन्द्रमसमसृजत । तदस्य चन्द्रमा अनूपतिष्ठते । तस्मात्स रेतसः प्रतिरूपः ॥१॥ भूतम्प्राणोऽस्य सः । ततो वायुमसृजत । तदस्य वायुरनूपतिष्ठते ॥२॥ सर्वमपानोऽस्य सः । ततः पशूनसृजत । तदस्य पशवोऽनूपतिष्ठन्ते ॥३॥ रूपं व्यानोऽस्य सः । ततः प्रजा

---

१ चे । २-र्वा । ३-ष्ठन्ते । ४ 'त' अधिक है । ५ तद् । नास्ति । ६ चर्चर्धा, अर्धा । ७-ति,-ता, त ।

१-त । २-शा । ३ रूपपायो ।

असृजत। तदस्य प्रजा अनूपतिष्ठन्ते। तस्मादासु प्रजासु रूपाण्यधिगम्यन्ते[4] ॥४॥ अपरिमितम्मनोऽस्य तत्। ततो[5] दिशोऽसृजत। तदस्य दिशोऽनूपतिष्ठन्ते। तस्माता अपरिमिताः। अपरिमितामिव हि मनः ॥५॥ श्रीर्ग्रीवास्य सा। ततस्समुद्रमसृजत। तदस्य समुद्रोऽनूपतिष्ठते ॥६॥ यमस्तपोऽस्य तत्। ततोऽग्निमसृजत[6]। तदस्या[7]ऽग्निरनूपतिष्ठते। तस्मात्स मथिता[8]दिव सन्तप्तादिव जायते ॥७॥ नाम चक्षुरस्य तत् ॥८॥ १४७॥

पञ्चदशोऽनुवाके द्वितीयः खण्डः।

तत आदित्यमसृजत। तदस्यादित्योऽनूपतिष्ठते ॥१॥ अग्र-म्मूर्धास्य सः। ततो दिवमसृजत। तदस्य द्यौरनूपतिष्ठते ॥२॥ सजाता अङ्गा[1]न्यस्य तानि[2]। अङ्गैर्हि[3] सह जायते। ततो वनस्पतीनसृजत। तदस्य वनस्पतयोऽनूपतिष्ठन्ते ॥३॥ पयो[4] लोमान्यस्य तानि। तत ओषधीरसृजत। तदस्यौषधयोऽनूपतिष्ठन्ते ॥४॥ महीया[5]-माँसान्यस्य तानि। माँसैर्हि[6] सह महीयते। ततो वयाँस्यसृजत। तदस्य वयाँस्यनूपतिष्ठन्ते। तस्मात्तानि प्रपतिष्णूनि। प्रपतिष्णूनी-

४—यते। ५ नास्ति, ततो......... तस्मात्। ६ नास्ति। ७ तस्या। ८ मथितामिव, मथितिताद् ॥

१ अंगान्य, अंगहान्य, अङ्गह्य्। २ ता। ३ गैह्। ४ नास्ति, पयो......... अनूपतिष्ठन्ते। ५ महिया, महिया। ६ स।

स्त्र महामाँसानि[7] ॥५॥ रसो मज्जा[8]ऽस्य सः । ततः पृथिवीमसृजत। तदस्य पृथिव्यनूपतिष्ठते[9] ॥६॥ स हैनं षोडशधाऽऽत्मानं विकृत्य सार्धं समैत् । तद्यत्सार्धं समैतत्[10] तत्साम्नस्सामत्वम् ॥७॥ स एवैष हिरण्मयः पुरुष उदतिष्ठत्प्रजानां जनिता[11] ॥८॥ १४८॥

पञ्चदशोऽनुवाके तृतीयः खण्डः ।

देवासुरा अस्पर्धन्त । ते देवाः प्रजापतिमुपाधावञ्जयामाऽसुरानिति ॥१॥ सोऽब्रवीन्न वै मां यूयं वित्थ[1] नाऽसुराः । यद्वै मां यूयं विद्यात[2] ततो वै यूयमेव स्यात, पराऽसुरा भवेयुरिति ॥२॥ तद्वै ब्रूहीत्य[3]ब्रुवन । सोऽब्रवीत्पुरुषः प्रजापतिस्सामेति मोऽपाद्ध्वम् । ततो वै यूयमेव भविष्यथ पराऽसुरा भविष्यन्तीति ॥३॥ तम्पुरुषः प्रजापतिस्सामेत्युपासत । ततो वै देवा अभवन् पराऽसुराः । स यो हैवं विद्वान्पुरुषः प्रजापतिस्सामेत्युपास्ते भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति ॥४॥ १४९॥

पञ्चदशोऽनुवाके चतुर्थः खण्डः । पञ्चदशोऽनुवाकस्समाप्तः ।

——o:——

७ महीमन ८ मज्ज्या । ९-न्ते । १० समैत: सत्यशात्, 'तयत्सार्धं समैतत' (!) पुनः हि । ११ जयिता ॥

१ वस्य । २-चेत । ३-हिं ॥

देवा वै निजिग्याना[1] अब्रुवन्द्वितीयं करवामहै । माऽद्वितीया भूमेति । तेऽब्रुवन् सामैव[2] द्वितीयं करवामहै । सामैव नो द्वितीय-मस्त्विति ॥१॥ त इमे द्यावापृथिवी अब्रुवन् समेतं साम प्रजनयत-मिति ॥२॥ सो[3]ऽसावस्या अबीभत्सत[4] । सो[3]ऽब्रवीद्वह्व वा एतस्यां किं च किं च कुर्वन्त्यभिष्ठीवन्त्य[5]भिचरन्त्यभ्यासते । पुनीतन्वेनामपूता वा इति ॥३॥ ते गाथामब्रुवन्त्वया पुनामेति । किं ततस्स्यादिति । शतसनि[6]स्स्या इति । तथेति । ते गाथयाऽपुनन् । तस्मादुत गाथया शतं सुनोति ॥४॥ ते कुम्भ्यामब्रुवन् त्वया पुनामेति । किं तत-स्स्यादिति । शतसनिस्स्या इति । तथेति । ते कुम्भ्यया[7]-ऽपुनन् । तस्मादुत कुम्भ्यया[8] शतं सुनोति[8] ॥५॥ ते[9] नाराशँसीमब्रु-वन् त्वया पुनामेति । किं ततस्स्यादिति । शतसनिस्स्या[10] इति । तथेति । ते नाराशँस्याऽपुनन् । तस्मादुत नाराशँस्या शतं सुनोति ॥६॥ ते रैभीम[11]ब्रुवन् त्वया पुनामेति । किं तत[12]स्स्यादिति । शतस-निस्स्या[10] इति । तथेति । ते रैभ्याऽपुनन् । तस्मादुत रैभ्या शतं

15995

---

१- विजिक्षाना । २ वा । ३ सा । ४ अबीहत्स- । ५-ष्ठिय्-। ६-नि,-नी । ७-म्य्-। ८ '५' पुन. । लिखा है । ९ तेन । १० शतनी । ११-भिम । १२ त ॥

मुनोति ॥७॥ मेयम्पूना । अथाऽमुमब्रवीद्धह्न वै किं च हि च पुमाँश्चरति । त्वमनुपुनीष्वेति ॥८॥ ॥५०॥

षाड्विंशब्राह्मणे प्रथम खण्ड ।

स पञ्चेनाऽपुनीत । पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूंषि पूतमनूक्तम्पूत [illegible] भवति य एवं वेद ॥१॥ ते समेत्य साम प्राजनयताम् । तत्समेत्य साम प्राजनयता तत्सा-म्नस्सामत्वम् ॥२॥ तदिदं साम सृष्टमद उत्क्रम्य लेलायदातिष्ठत् । तस्य सर्वे देवा ममायिन आसन्मम ममेति ॥३॥ तेऽब्रुवन्वीद-म्भजामहा इति । तस्य विभागे न समपादयन । तान्प्रजापतिर-ब्रवीदपेत । मम वा एतत् । अहमेव वो विभक्ष्यामीति ॥४॥ सोऽग्निमब्रवीत्त्वं वै मे ज्येष्ठ पुत्राणामसि । त्वम्प्रथमो वृणीष्वेति ॥५॥ सोऽब्रवीन्मन्द्र साम्नो वृणेऽन्नाद्यमिति । स य एतद्गायाद-न्नाद एव सोऽसन्नायु स देवानामृच्छाय एव विद्वाँसमेतद्गायन्त-मुपवदानिति ॥६॥ अथन्द्रमब्रवीत्त्वमनुवृणीष्वेति ॥७॥ सोऽब्र-

१३ नम ।

१-सद्-। पञ्चेना । २-याम । ३ अज्-। ४-म्पत । ५ मे । ६ 'वीऽदम्' के लिये स्थान खाली है, वीदा । ७ मयिष्य-। ८ भियम । ९ गायथाच । १० क्षीमाद् । ११ अथ । १२ सोमम ।

वीदुग्र[13] साम्नो वृणे श्रियमिति[14]। स[15] य एतद्गायाच्छ्रीमानेव[16] सोऽस-
न्मामु स देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥८॥
अथ सोममब्रवीत्त्वमनुवृणीष्वेति ॥९॥ सोऽब्रवीद्वल्गु[15] साम्नो वृणे
प्रियमिति। स य एतद्गायात्प्रिय एव स कीर्तेः प्रियश्चक्षुपः प्रिय-
स्सर्वेषामसन् मामु स देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुप-
वदादिति ॥१०॥ अथ बृहस्पतिमब्रवीत्त्वमनुवृणीष्वेति[17][18] ॥११॥
सोऽब्रवीत्क्रौञ्चं साम्नो वृणे ब्रह्मवर्चसमिति। स य एतद्गायाद्ब्रह्म-
वर्चस्येव सोऽसन्मामु स देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुप-
वदादिति ॥१२॥ ३।५।१॥

षोडशोऽनुवाके द्वितीय खण्ड ।

अथ विश्वान्देवानब्रवीद्यूयमनुवृणीध्वमिति॥१॥तेऽब्रुवन्नैभ्य-
देवं साम्नो वृणीमहे भजनमिति। स य एतद्गायात्थमावानेव सोऽस-
दस्मानु[1] देवानामृच्छाय[2] एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥२॥
अथ पशूनब्रवीद्यूयमनुवृणीध्वमिति ॥३॥ तेऽब्रुवन्वायुर्वा अस्माक-
मीशे। स एव नो वरिष्यत[3] इति। ते वायुश्च पशवश्चाब्रुवन्निरुक्तं[4] साम्नो

---

१३ चल्गु। १४ प्रियम्। १५ नास्ति, स य ' 'सोऽब्रवीद् ६में।
१६ गायन्नच्। १७ नास्ति। १८ वृष्ट—।

१ 'म' अधिक है। २ नीचे से 'च स वायु' अधिक देता है।
३ वरिष्ठ। ४ अनिरु—।

वृणीमहे पशव्यमिति। स य एतद्गायात्पशुमानेव सोऽसदस्मासु च

स वायुं[5] च देवानामृच्छाय[6] एवं विद्वाँसमेतद्गायन्तमुपवदादिति॥४॥

अथ प्रजापतिरब्रवीदहमनुवारिष्य इति[7] ॥५॥ सोऽब्रवीदनिरुक्तं

साम्नो वृणे स्वर्ग्यमिति[8]। स य एतद्गायात्स्वर्गलोक एव सोऽसन्मासु[9]

स देवानामृच्छाय[6] एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥६॥

अथ वरुणमब्रवीत्त्वमनुवृणीष्वेति ॥७॥ सोऽब्रवीद्यद्वो न कश्चना-

ऽवृत तदहम्परिहरिष्य[10] इति। किमिति। अपध्वान्तं[11] साम्नो वृणेऽपश-

व्यमिति। स य एतद्गायादपशुरेव[12] सोऽसन्मासु स देवानामृच्छाय[13]

एतद्गायादिति ॥८॥ तानि वा एतान्यष्टौ गीतागीतानि साम्नः।

इमान्यु ह वै सप्तगीतानि। अथेयमेव[14] वारवयागाऽगीता ॥९॥ स

यां ह कां[15] चेदं विद्वानेतासां सप्तानामागानां गायति गीतमेवास्य

भवत्येतानु कामानाप्नोति[16][17] य एतासु कामाः। अथेमामेव वारवणी-

मागां न गायेत् ॥१०॥ ॥५२॥

षोडशोऽनुवाके तृतीयः खण्डः। षोडशोऽनुवाकः समाप्तः।

———:०———

५-युय्। ६ 'इति' तक दोष नहीं लिखा। ७ ति। ८ स्वर्गम्।
९ समुत्। १०-हम्प्-य-, यत। ११ मपद्धमातम, मपध्मातम। १२
पशु-। १३ मृच्छाद्। १४-य, रय। १५-न्द्। १६ कामा। १७ नीरभ-,
निरंभोति॥

द्वयं वावेदमग्र आसीत्सच्चैवासच्च ॥१॥ तयोर्यत् सत् तत्साम तन्मनस्स प्राणः। अथ यदसत्तदृक्[1] सा वाक् सोऽपानः ॥२॥ तद्यन्मनश्च प्राणश्च तत्समानम् । अथ या वाक् चापानश्च तत्समानम् । इदमायतनम्मनश्च प्राणश्चेदमायतनं[2] वाक् चापानश्च । तस्मात्पुमान्दक्षिणतो योषामुपशेते[3] ॥३॥ सेयमृगस्मिन् सामन्[4] मिथुनमैच्छत । तामपृच्छन् का त्वमसीति । साहमस्मीत्यब्रवीत् । अथ या अहममोऽस्मीति ॥४॥ तद्यत्सा चाऽमश्चतत् सामाऽभवत् तत्साम्नस्सामत्वम् ॥५॥ तौ वै सम्भवावेति । नेत्यब्रवीत्स्वसा वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति॥६॥साऽब्रवीन्न वै तं विन्दामि येन सम्भवेयम्[5] । त्वयैव सम्भवानीति। सा वै पुनीष्वेत्यब्रवीत्। अपूता या असीति[6] ॥७॥ साऽपुनीत यदिदं विप्रा[7] वदन्ति तेन । साऽब्रवीत्त्वयेदम्भविष्यतीति[8]।मत्यूहेत्यब्रवीत्[9]। धीर्वा एषा। प्रजानां जीवनं वा एतद्भविष्यतीति । तथेति । तत्मत्यौहत। तस्मादेषा धीरेव प्रजानां जीवनमेव ॥८॥ पुनीष्वेत्यब्रवीत् । साऽपुनीत गाथया साऽपुनीत कुम्भ्यया[10] साऽपुनीत नाराशँस्या साऽपुनीत पुराखेति-

---

१ म्यष-असम्यदृच मचितेऽसि, (थम्न्य) अचितेति । २-ना । ३ उपयशेते । ४-म । ५ सम्भयेत् । यम । ६ 'या' अधिक है । ७ प्रा, रिमा । ८ त्वे । ९ त्यत् । १०-म्भ-, 'या' अधिक है ।

द्दासेम साऽपुनीत यदिदम्[11] आदाय नाऽऽ[12]गायन्ति तेन ॥९॥ साऽब्र-वीत्केदम्भविष्यतीति । मत्यृद्धेत्यब्रवीत् । श्रीर्वा एषा । प्रजाना जीवन वा एतद्भविष्यतीति । तथेति । तत्पत्यौहत् । तस्मादेषा धीर्वै प्रजाना जीवनम्वेत ॥१०॥ पुनीष्वैवेत्यब्रवीत ॥११॥ १५३॥

सप्तदशोऽनुवाक प्रथम खण्ड ।

सा मधुनाऽपुनीत[1] । तस्मादुत ब्रह्मचारी मधु नाऽश्नीयाद्वेदस्य पलाव[2] इति । काम ह त्वाचार्यदत्तमश्नीयात् ॥१॥ अथर्क गामा-ब्रवीद्बहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति । स भरण्डकेष्णोना[3]ऽपुनीत । पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूँषि पूतमनूक्तम्पूत सर्वम्भवति य एव वेद ॥२॥ ताभ्या सदो मिथुनाय पर्यश्रयन्[4] । तस्मादुपरसथीया[5] रात्रिं सदसि[6] न शयीत[7] । अत्र ह्येताम्रसामे उपरसथीया[8] रात्रिं सदसि सम्भवतः । स यथा श्रेय स उपद्रष्ट्र हि शक्नदीश्वरोऽनुलग्न[9]ः[10] पराभवितोः ॥३॥ अथो आहुरुद्गातुर्मुखे सम्भवतः । उद्गातुरेव मुख नैदे[11]-

---

११ इमम । १२ मादायना, मादायना ॥

१ सारे पद का पुनर्लेख है । २ स 'कामम' के स्थान में । मा सर्वत्र है । ३ हरण्डकेष्णोना भरण्ड, भरण्डक दणोना । ४-श्रय । ५-थीयाम,-रीयाम । ६-ई । ७ यीत, येत । ८-इ-। ९, मद् । १० नुनुजय, मनुनुग्न-।

वेति ॥४॥ तदु या आहुः काममेवोद्गातुर्मुखमीक्षेत । उपवसथीयामे-[12] वैतां रात्रिं सदसि न शयीत । अत्र धेनैनाहवमामे उपवसथीयां . रात्रिं सदसि सम्भवत इति ॥५॥ तां सम्भविष्यन्नाहाऽमोऽहम-[13] स्मि सा त्वं सा त्वमस्यमोऽहम् । सा मामनुव्रता भूत्वा प्रजाः प्रज-[14] नयावहै । एहि सम्भवावहा[15] इति ॥६॥ तां सम्भवन्नत्यरिच्यत[16] सोऽब्रवीन्न वै त्वाऽनुभवामि । विराड् भूत्वा प्रजनयावेति । तथेति ॥७॥ तौ विराड्भूत्वा प्राजनयताम् । हिङ्कारश्चाऽऽहावश्च[17] प्रस्तावश्च प्रथमा चोद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्चैवं[18] विराड् भूत्वा प्राजनयताम्[19] । ते अमुमजनयतां योऽसौ तपति । ते व्यद्रवताम्[20] ॥८॥ १५४॥

सप्तदशोऽनुवाके द्वितीयः खण्डः ।

मद्ध्यभृ३न्मद्ध्यभृ३दिति । तस्मादाहुर्मधुपुत्र[1] इति ॥१॥ तस्मादुतस्त्रियो मधु नाऽश्नन्ति पुत्राणामिदं व्रतं चराम इति वदन्तीः ॥२॥ तदयं तृचोऽन्वदृश्यत । इयमेव[2] गायत्र्यन्तरिक्षं[3] त्रिष्टुबसौ जगती । तस्यैतत्तृचः ॥३॥ स उपरिष्टात्सामाऽभ्याहितं तपति ।

---

११ न । १२–थी– । १३ 'रत्न' अधिक है । १४–प्र– । १५ संभवत । १६ भ्रात्यरिच्यते । १७ हें– । १८ च । एवम् । १९ प्रज्–। २० व्यद्रप्ताम्, व्यद्रधनाम्, व्यरपताम् (?) ॥

१–भा । २ इदम् । ३–ईक्ष्–।

सोऽस्रुव इवासीदन्नेत्यायदिन । स नोर्ध्वोऽतपत् ॥४॥ स देवानब्रवीदुन्मा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह हंहेतेति ॥५॥ तथेति । तमुदगायन् । तमेतदत्राऽऽहंहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा देवानां श्रीः ॥६॥ तत एतदूर्ध्वस्तपति । स नार्वाङतपत् ॥७॥ स ऋषीनब्रवीदनु मा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिहहंहेतेति ॥८॥ तथेति । तमन्वगायन् । तमेतदत्राहंहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा ऋषीणां श्रीः ॥९॥ तत एतदर्वाङ् तपति । स न तिर्यङ् ङतपत् ॥१०॥ स गन्धर्वाप्सरसोऽब्रवीदामा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिहहंहेतेति ॥११॥ तथेति । तमागायन् । तमेतदत्राऽऽहंहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा गन्धर्वाप्सरसां श्रीः ॥१२॥ तत एतत् तिर्यङ् तपति ॥१३॥ तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम् । तद्यथेदं वयमागायोद्गायाम एतदुद्गीतम् । अथ यद्यथागीतं तदनुगीतम् । अथ यत्किंचेति साम्नस्तदागीतम् । एतानि ह्येव त्रीणि साम्नः ॥१४॥ १५५॥

सप्तदशोऽनुवाके तृतीयः खण्डः । सप्तदशोऽनुवाकस्समाप्तः ।

:o:

४ स्व्-,ध्-। ५ हुंहेते। ६ उदगात्। ७-हत्। ८ तप्-। ९ तिर्य्यंङ्। १० त । ११ तिर्यङ्। १२ आगयां, आगेयो-। १३-यम ॥

आपो वा इदमग्रे महत्सलिलमासीत् । स ऊर्मिरूर्मिमस्कन्दत्[1] । ततो हिरण्मयौ कुद्यौ[2] समभवतां ते[3] एवर्कसामे[4] ॥१॥ सेयमृगिदं सामाऽभ्यप्लवत[5] । तामपृच्छत का त्वमसीति । साहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति । तद्यत्सा चाऽमश्च तत्साम्नस्सामत्वम् ॥२॥ तौ वै सम्भवावेति । नेत्यब्रवीत्स्वसा वै मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति ॥३॥ सा पराप्लवत[6] मिथुनमिच्छमाना । सा समासहस्रं समतीः पर्यप्लवत ॥४॥ तदेष श्लोकः—

> त्रीरिंत्राऽग्रे सचरतीरिच्छन्ती[7] सलिले पतिम्[8] ।
> समासहस्रं समती स्ततोऽजायत पश्यत, इति ॥५॥

असौ वा आदित्यः पश्यतः[9] । एष एव तदजायत[10] । एतेन हि पश्यति ॥६॥ साऽपित्वा[11] न्यप्लवत । साऽब्रवीन्न[12] वै तं विन्दामि येन सम्भवेयम् । त्वयैव सम्भवानीति ॥७॥ सा वै द्वितीयामिच्छ-न्त्यब्रवीन्न वै मैकोऽर्यस्यसीति । सा द्वितीयां[13] विन्त्वा[14] न्यप्लवत ॥८॥ ( तृतीयाम् ) इच्छन्त्येवाब्रवीन्नो[21] वाव[15] मा[16] द्वे[17] उद्यंस्यथ इति । सा तृतीयां[13] विन्त्वा न्यप्लवत । सोऽब्रवीद्[17]त्र वै मोऽद्यंस्यथेति[18]

---

१—द । २ कुद्यौ । ३ येप । ४ कैसा—। ५ ह्यप्—। ६ पपरा—। ७ समती । ८—ति । ९ पदयः । १० तम् । ११ पित्वा । १२ नास्ति सा………न्यप्लवत । १३—यम् । १४ धे । १५ वा । १६ स्थान छोड़ा हुआ है, ध्ये । १७ अद्— १८—स्यथी ।

॥९॥ सा यदेकयाऽग्रे समवदत[19] तस्मादेकर्चे साम । अथ यद्द्वे अपा-सेधत्तस्माद्द्वयोर्न कुर्वन्ति । अथ यत् तिसृभि[20]स्समपादयत्[21] तस्मादु तृचे साम ॥१०॥ ता अब्रवीत्पुनीध्वं न पूता वै स्मेति ॥११॥ १.५६॥

अष्टादशोऽनुवाके प्रथमः खण्डः ।

सा गायत्री गाथयाऽपुनीत नाराशंस्या[1] त्रिष्टुब्रैभ्या जगती । भीमम्नत[2] मन्नमपात्राधिपतेति । तस्माद्भीमलाभियो वा एताः । धियो या इमा मन्नमपावाधिपतीते[3] । तस्मादु भीमलाः । तस्मादु गायतां[4] नाऽभीयात्[5] । मन्नेन ह्येते जीवन्ति ॥१॥ अथर्क्[6] सामाऽब्रवीद्बहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति । स ऊर्ध्वगयेना-ऽपुनीत ॥२॥ पूतानि ह वा अस्य सामानि पूता[7] ऋचः पूतानि यजूँषि पूतमनूक्तम्[8] पूतं[9] सर्वम्भरति य एवं वेद ॥३॥ ताभ्यां दिशो मिथुनाय पर्यौहन् । तां सम्भविष्यन्[10] सह्वयता[11]ऽमोऽहमस्मि सा त्वं सा[12] त्वमस्यमोऽहमिति ॥४॥ तामेतदुभयतो वाचा[13]ऽत्यरिच्यन्[14] हिङ्कारेण पुरस्तात्स्तोभेन मध्यतो निधनेनोपरिष्टात् । अतितिस्रो ब्राह्मणायनीस्सदृशी रिच्यते य एवं वेद ॥५॥ तयोर्यस्सम्भवतो-

---

१९-पदू-। २० तिस्र-। २१ सम्प-॥

१-स्यांत्। २ य। ३-थे। ४-ता। ५ ऽभी-। ६ र्क। ७-तानी। ८-ता। ९ नूक्-। १०-ष्यन्न। ११ समचयन, अह्वयन्त। १२ साम १३-र्ध। १४ त्यरूच्यते।

स्वँवस्तूपौऽद्रवत्[15] (प्राणास्) ते । ते प्राणा एवोर्ध्वा अद्रवन्[16] ॥६॥ सोऽसावादित्यस्स एष एव उदग्निरेव गी चन्द्रमा एव थम् । सामान्येव उद्दच एव गी यजूंष्येव थमित्यधिदेवतम् ॥७॥ अथाऽध्यात्मम्[17] । प्राण एव उद्वागेव गी मन एव थम् । स एषोऽधिदेवतं चाऽध्यात्मं चोद्गीथः[18] ॥८॥ स य एवमेतदधिदेवतं चाऽध्यात्मं चोद्गीथं वेदैतेन हास्य सर्वेणोद्गीतम्[19] भवत्येतस्मादु[20] एव सर्वस्मादाद्युश्च्यते य एवं विद्वाँसमुपवदति ॥९॥ १।५७॥

अथाष्टमोऽनुवाके द्वितीय खण्ड ।

तद्यदिदमाहुः क उदगासीरिति क एतमादित्यमगासीरिति[1] ह वा एतत्पृच्छन्ति[2] ॥१॥ एतं ह वा एतं त्रय्या[3] विद्यया गायन्ति । यथा वीणागाथिनो[4] गापयेयुरेवम् ॥२॥ स एष हृदः[5] कामानाम्पूर्णो यन्मनः । तस्यैषा कुल्या[6] यद्वाक्[7][8] ॥३॥ तद्यथा[9] वा अपो[10] हृदात्कुल्ययोऽपरामुपनयन्त्येवमेवैतन्मनसोऽधि[11] वाचोद्गाता यजमानम्[12] यस्य कामान् प्रयच्छति ॥४॥ स य उद्गातारं दक्षिणाभिराराधयति[13][14]

१५ चुँ- । १६ द्र- । १७ ऽद्धा- । १८ गीथ्- । १९-गीय्- । २० भवत्येति, भवन्ति ॥

१-सौ । २ प्रच्छॅन्त्य् । ३ नृय्या । ४-गायिनो, गायर्- । ५ हृद्- । ६ कूल्- । ७ यत् । ८ वात् । ९-त्र । १० अदो । ११-यॅन्य,-यन्ते, -यन्त्य् । १२-मा । १३ दक्षिणोभि । १४ राध्- ।

तं सा कुल्यो[६]ऽपधावति । य उ एवं नाऽऽराधयति स उ तामपि-
हन्ति ॥५॥ अथ वा अतः[१५] प्रत्तिश्चैव[१६] प्रतिग्रहश्च । तद्भूममिति[१७] वै
प्रदीयते । तद्वाचा यजमानाय प्रदेयम्मनसाऽऽत्मने[१८] । तथा ह सर्वं
न प्रयच्छति ॥६॥ तद्यदिदं सम्भवतो रेतोऽसिन्यत[१९] तदशयत[२०] ।
यथा हिरण्यमविष्ठितं[२१] लेलायदेवम् ॥७॥ तस्य सर्वे देवा ममत्विन
आसन्मम ममेति । तेऽब्रुवन्नीदं करवामहा इति । तेऽब्रुवञ्छ्रियो[२२] वा
इदमस्मत् । आत्मभिरेवैनद्विकरवामहा इति ॥८॥ तदात्मभिरेव
व्यकुर्वत । तेषां वायुरेव हिङ्कार आसीदग्निः प्रस्ताव इन्द्र आदि-
स्सोमबृहस्पती[२३] उद्गीथोऽश्विनौ प्रतिहारो विश्वे देवा उपद्रवः
प्रजापतिरेव निधनम् ॥९॥ एता वै सर्वा देवता एतद्धिरण्यम्[२४] ।
अस्य सर्वाभिर्देवताभिस्स्तुतम्भवति य एवं वेद । एताभ्य उ एव स
सर्वाभ्यो देवताभ्य आवृश्च्यते य एवं विद्वांसमुपवदति ॥१०॥ ॥५८॥

अष्टादशोऽनुवाके तृतीयः खण्डः ।

अथ ह ब्रह्मदत्तश्चैकितानेयः कुरू[१]ञ्जगामाऽभिप्रतारिणं[२] काक्ष-
सेनिम् । स हाऽस्मै मधुपर्कं ययाच ॥१॥ अथ हास्य वै[३]प्रपद्य पुरो-

---

. १५ अथ । १६ प्रतिश् । १७ धुं-। १८ आत्-। १९ सिच्य्-।
२० दश्-। २१ अपि-,अपितृनं । २२ या । २३ सोमाबृ-ह । २४ हिरण्य् ॥

१ कु-, भारिन् । २ पक्ष में यहां हि समाप्ति है । ३-य ।

हितोऽन्ते निषसाद शौनकः । त हाऽनामन्त्र्य[4] मधुपर्कम्पपौ ॥२॥ स होवाच किं विद्वान्नो दाल्भ्याऽनामन्त्र्य मधुपर्कम्पिबसीति । सामैर्यैम्प्रपद्येति[5] होवाच ॥३॥ त ह तत्रैव[6] पप्रच्छ यद्वा यौ तद्वेत्था३इति । हिङ्कारो वा अस्य स इति ॥४॥ यदग्नौ तद्वेत्था३-इति । प्रस्तावो वा अस्य स इति ॥५॥ यदिन्द्रे तद्वेत्था३इति । आदिर्वा अस्य स इति ॥६॥ यत्सोमबृहस्पत्योस्तद्[7]वेत्था३इति । उद्गीथो वा अस्य स इति ॥७॥ यदश्विनोस्तद्वेत्था३इति । प्रतिहारो वा अस्य स इति ॥८॥ यद्विश्वेषु देवेषु[8] तद्वेत्था[9]३इति । उपद्रवो वा अस्य स इति ॥९॥ यत्प्रजापतौ तद्वेत्था३इति । निधनं वा अस्य तदिति होवाच । आर्षेयं वा अस्य[10] तद्बन्धुता वा अस्य सेति ॥१०॥ स होवाच नमस्तेऽस्तु भगवो विद्वानपा मधुपर्कमिति ॥११॥ अथ हैतरः पप्रच्छ किं देवस[11] सामवैर्यैम्प्रपद्योति[12] । यद्देवसामु स्तुवत इति होवाच तद्देवसामिति ॥१२॥ तदेतत् साम्नैव मत्युक्तम्[13] । व्याशिर्वा अस्यैपेति होवाच शूद्धेवेति । मेदं ते नमोऽकर्मेति होवाच । मैव नोऽतिप्राक्षीरिति ॥१३॥ स होवाचाऽमद्यं

---

४-मन्त्र । ५ सामवैर्यर्म्, 'र' रहित । ६ तत । ७ सोमाब्-। ८ 'द-' का पुनर्लेख । ९ नास्ति । १० अव्य । ११-वत्सा । १२ सामवैम्या । १३-उत्तम ।

थाव त्वा देवतामभ्यद्यं वाव त्वा देवतायै देवताः । वाग्देवसं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः । तदेतदद्भ्यो[१४] जातं सामाऽप्सु प्रतिष्ठितमिति ॥१४॥ ११५६॥

अष्टादशोऽनुवाके चतुर्थः खण्डः ।

देवासुरा अस्पर्धन्त । ते देवा मनसोदगायन्[१] । तदेषामसुरा अभिद्रुत्य[२] पाप्मना समसृजन्[३] । तस्माद्बहु किं च किं च मनसा ध्यायति । पुण्यं चैनेन ध्यायति पापं च ॥१॥ ते वाचोदगायन्। तां तथैवाऽकुर्वन्[४][५] । तस्माद्बहु किं च किं च वाचा वदति । सत्यं[६] चैनया[७] वदत्यनृतं च ॥२॥ ते चक्षुषोदगायन् । तत्तथैवाऽकुर्वन् तस्माद्बहु किं च किं च चक्षुषा पश्यति । दर्शनीयं चैनेन पश्यत्य दर्शनीयं च ॥३॥ ते श्रोत्रेणोदगायन्।तत्तथैवाऽकुर्वन्। तस्माद्बहु किं[८] च किं[८] च श्रोत्रेण शृणोति । श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥४॥ तेऽपानेनोदगायन् । तं तथैवाऽकुर्वन् । तस्माद्बहु किं च किं चाऽपानेन जिघ्रति । सुरभि चैनेन जिघ्रति दुर्गन्धि च ॥५॥ ते प्राणेनोदगायन्[९] । अथासुरा आद्रवँस्तया करिष्याम इति मन्यमानाः ॥६॥ स यथाऽश्मानमृत्वा लोष्टो विध्वँसेतैवमेवाऽसुरा

१४ भ्यो ।

१ ऽगाय्—। २–द्रुत्य अथवा–द्रुत्य । ३–सृज्–। ४ थ । ५ कुर्–। ६–त्य । ७ चै । ८ नास्ति । ९–गाय ।

व्यध्वँसन्त[10] । स एषोऽश्माऽऽखणो[11] यत्प्राणः ॥७॥ स यथाऽश्मान-
माखण[12]मृत्वा लोष्टो विध्वँसत एवमेव स विध्वँसते य एवं विद्वाँ-
समुपवदति ॥८॥ १६०॥

अष्टादशोऽनुवाके पञ्चमः खण्डः । अष्टादशोऽनुवाकस्समाप्तः ।

[ इति प्रथमोऽध्यायः । ]

---

१० स्ते, यन्ता । ११–णाँ । १२ मायोम ।

# [ अथ द्वितीयोऽध्यायः । ]

देवानां वै षडुद्गातार आसन् वाक् च मनश्च चक्षुश्च श्रोत्रं चाऽपानश्च प्राणश्च ॥१॥ तेऽब्रियन्त तेनोद्गात्रा दीक्षामहै येनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गंलोकमियामेति ॥२॥ तेऽब्रुवन् वाचोद्गात्रा दीक्षामहा इति । ते वाचोद्गात्राऽदीक्षन्त । स यदेव वाचा वदति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥३॥ [1]ताम्पाप्माऽन्वसृज्यन । [2]स यदेव वाचा पापं वदति स एव स पाप्मा ॥४॥ तेऽब्रुवन् न वै नोऽयम् [3]मृत्युं न पाप्मानमत्यवाक्षीत्। मनसोद्गात्रा दीक्षामहा इति ॥५॥ ते मनसोद्गात्राऽदीक्षन्त । स यदेव मनसा ध्यायति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥६॥ तत्पाप्माऽन्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥७॥ तेऽब्रुवन्[4] नो न्वाव[5] नोऽयम मृत्युं[3] न पाप्मानमत्यवाक्षीत्[6] । चक्षुषोद्गात्रा दीक्षामहा इति ॥८॥ ते चक्षुषोद्गात्राऽदीक्षन्त । स यदेव चक्षुषा पश्यति तदात्मन[7] आगायदथ य इतरे कामास्तान्देवेभ्यः ॥९॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पापम्पश्यति ( स एव स पाप्मा ) ॥१०॥ तेऽब्रुवन्नो न्वाव

---

१-म। २ 'य' अधिकम्। ३-त्यु। ४ब्रवीन्। ५न्व। ६अघरयच्-। ७-मान्-।

नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥११॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त । स यदेव श्रोत्रेण शृणोति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१२॥ तत्पाप्माऽन्वसृज्यत । स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥१३॥ तेऽब्रुवन्नो न्वाव नोऽयम् मृत्युं न पाप्मानमत्यवाक्षीत् । अपानेनोद्गात्रा दीक्षामहा इति ॥१४॥ तेऽपानेनोद्गात्राऽदीक्षन्त । स यदेवाऽपानेनाऽपानिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१५॥ तम्पाप्माऽन्वसृज्यत । स यदेवाऽपानेन पापं गन्धमपानिति स एव स पाप्मा ॥१६॥ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् । प्राणेनोद्गात्रा दीक्षामहा इति ॥१७॥ ते प्राणेनोद्गात्राऽदीक्षन्त । स यदेव प्राणेन प्राणिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१८॥ तम्पाप्मानाऽन्वसृज्यत । न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति ॥१९॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् । अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥२०॥ २१॥

प्रथमेऽनुवाके प्रथमः खण्डः ।

---

८ अपानिति ।

सा या सा वागासीत्सोऽग्निरभवत् ॥१॥ अथ यत्तन्मन आसीत् स चन्द्रमा अभवत् ॥२॥ अथ यत्तच्चक्षुरासीत् स आदित्योऽभवत् ॥३॥ अथ यत्तच्छ्रोत्रमासीत्ता इमा दिशोऽभवन् । ता उ एव विश्वेदेवाः ॥४॥ अथ यस्सोऽपान आसीत्स बृहस्पतिरभवत् । यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पतिः ॥५॥ अथ यस्स प्राण आसीत्स प्रजापतिरभवत् । स एष पुत्री प्रजावानु[1]यो यः प्राणः । तस्य स्वर एव प्रजाः । प्रजावान्भवति य एवं वेद ॥६॥ तं हैतमेके प्रसलमेव गायन्ति प्राणा३प्राणा३प्राणा३ हुम्भा ओवा इति ॥७॥ तदु होवाच शाट्यायनिरुक्त एतमर्हति[2] प्रसलं गातुम् । यद्वाव वाचा करोति तदेतदेवाऽस्य कृतम्भवतीति ॥८॥ अथ या प्रेत[3] ऋतसाम्नोरेव प्रजातिः । स यद्धिङ्करोत्यभ्येव तेन क्रन्दति[4] । अथ यत्प्रस्तौत्येव तेन ह्वयते । अथ यदादिमादत्ते रेत एव तेन सिञ्चति । अथ यदुद्गायति रेत एव तेन सिक्तं सम्भावयति[5] । अथ यत्प्रति-हरति रेत एव तेन सम्भूतं प्रवर्तयति । अथ यदुपद्रवति रेत एव तेन प्रवृद्धं विकरोति । अथ यन्निधनमुपैति रेत एव तेन विकृतम्प्रज-

---

१ यत् । २ प्रतम, अथ । ३ कुर्वन्ति । ४ ए । ५-भय्-, नास्ति यति । अथ यत्प्रतिहरति ।

नयाति । सैपर्क्सान्नोः प्रजातिः ॥९॥ स च एवमेतामृक्साम्नोः प्रजातिं वेद प्र हैनमृक्सामनी जनयतः ॥१०॥ ३।२॥

प्रथमेऽनुवाके द्वितीयः खण्डः । प्रथमोऽनुवाकस्समाप्तः ॥

---

एष एवेदमग्र आसीत्[1] एष तपति । स एष सर्वेषाम्भूतानां[2] तेजो हर इन्द्रियं वीर्यमादायोर्ध्व उदक्रामत् ॥१॥ सोऽकामयते-कमेणाऽन्नं स्वादु मृदु[3] देवानां[4] वनामिति[5] ॥२॥ स तपोऽतप्यत । स तप तप्त्वैकेनैवाऽन्नमभवत्[6] ॥३॥ तं देवाश्चर्षयश्चोपसमैप्सन् । अथैषोऽसुरान्नूनहनोऽसृजतैनस्य पाप्मनोऽनन्वागमाय[7] ॥४॥ तं वाचोपसमैप्सन् । ते वाचं समारोहन् । तेषां वाचम्पर्यादत्त । तस्मात्पर्यादत्ता वाक् । सत्यं च ह्येनया वदत्यनृतं च ॥५॥ तन्म-नसोपसमैप्सन् । ते मनस्समारोहन् । तेषाम्मनः पर्यादत्त । तस्मात्पर्यादत्तम्मन[ः]म् । पुण्यं च ह्येनेन ध्यायति पापं च ॥६॥ तं चक्षुषोपसमैप्सन् । ते चक्षुस्समारोहन् । तेषां चक्षुः पर्यादत्त । तस्मात्पर्यात्तं[8] चक्षुः । दर्शनीयं च ह्येनेन पश्यत्यदर्शनीयं च ॥७॥

---

६ ऋ.सं.; ऋसासं.: ।

[1] स । [2] -या । [3] मदु । [4] नास्ति । [5] मति । [6] ऐवा । [7] 'उदेवानाम' पूर्व से पुनः है । [8] पर्यात्तं ।

तं श्रोत्रेणोपससृप्सन्। ते श्रोत्रं समारोहन्। तेषां श्रोत्रम्पर्यादत्त। तस्मात्पर्यात्तं[१] श्रोत्रम्। श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥८॥ तदपानेनोपससृप्सन्। तेऽपानं समारोहन्। तेषामपानम्पर्यादत्त। तस्मात्पर्यात्तोऽपानः। सुरभि च ह्येनेन जिघ्रति दुर्गन्धि च ॥९॥ तन्प्राणेनोपससृप्सन्। तन्प्राणेनोपसमाप्नुवन् ॥१०॥ अथाऽसुरा मृत्वहन आत्मन्मेहयिष्याम इति मन्यमानाः ॥११॥ स यथाऽश्मानमृत्वा लोष्टो विध्वंसेतैवमेवाऽसुरा व्यध्वंसन्त। स एषोऽश्माऽऽखणो यत्प्राणः ॥१२॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपस्पृशति ॥१३॥ २।३॥

द्वितीयेऽनुवाके प्रथम-खण्डः।

स एष वशी दीक्षाग्र उद्गीथो यत्प्राणः[१]। एष हीदं सर्वं वशेकुरुते ॥१॥ वशी भवति वशे[२] स्वान्कुरुते य एवं वेद। अस्य ह्यसावग्रे दीप्यते३[३] अमुष्य[४] वासः ॥२॥ तं हैतमुद्गीथं शाट्यायनिराचष्टे वशी दीक्षाग्र इति। दीक्षाग्रा ह वा अस्य कीर्तिर्भवति य एवं वेद ॥३॥ आभूतिरिति कारीरादयः प्राणं वा अनुभजाः पशव आभवन्ति। स य एवमेतमाभूतिरित्युपास्त ऐरं भागेन प्रजया पशुभिर्भवति ॥४॥

---

१ पर्यास्त, पर्य्याप्त।

१ वशी त ह्वीदं सर्वं वशेकुरुते ऐसा पाठ देते हैं। २—दो।
३ प्मुष्य—। ४ यत।

सम्भूतिरिति[5] सात्ययज्ञयः । प्राणं वा अनुप्रजाः पशवस्सम्भवन्ति । स य एवमेतं सम्भूतिरित्युपास्ते सम्भ[व]ति प्राणेन प्रजया पशुभि-र्भवति ॥५॥ प्रभूतिरिति शैलनाः[6] । प्राणं वा अनुप्रजाः पशवः प्रभवन्ति । स य एवमेतम्प्रभूतिरित्युपास्ते प्रैव प्राणेन[7] प्रजया पशुभिर्भवति ॥६॥ भूतिरिति[8] माक्षाविनः । प्राणं वा अनुप्रजाः पशवो भवन्ति । स य एवमेतम्भूतिरित्युपास्ते भवत्येव प्राणेन प्रजया पशुभिः ॥७॥ अपरोधो[9]ऽनपरुद्ध इति पार्ष्णाश्शैलनः । एष ह्यन्यमपरुणद्धि[10] नैतमन्यः । एष ह[11] वाऽस्य द्विषन्तम्[12]भ्रातृव्यम-परुणाद्धि य एवं वेद ॥८॥२।४॥

द्वितीयेऽनुवाके द्वितीयः खण्डः ।

एकवीर[1] इत्या[2]रुणेयः[3] । एको ह्येष वीरो यत्प्राणः । आ हा-ऽस्यैको वीरो वीर्यवाञ्जायते य एवं वेद ॥१॥ एकपुत्र इति चैकितानेयः । एको[4] ह्येष पुत्रो यत्प्राणः ॥२॥ स उ एव द्विपुत्र इति । द्वौ हि प्राणापानौ ॥३॥ स उ एव त्रिपुत्र[5] इति । त्रयो हि प्राणोऽपानो व्यानः ॥४॥ स उ एव चतुष्पुत्र इति । चत्वारो हि प्राणोऽपानो

---

५-भूर । ६ शैलि- । ७ 'प्रजया' अधिक है । ८ भूर् । ९ अपरोद्धा । १०-णद्धि । ११ से । १२-त । १३-धीन्- ।

१-र । २ त्य् । ३-णय, 'एको' के स्थान में सर्वत्र 'एका' । ४-ए । ५ द्विप्- ।

व्यानस्समानः ॥५॥ स उ एव पञ्चपुत्र इति। पञ्च हि प्राणोऽपानो व्यानस्समानोऽपानः ॥६॥ स उ एव षट्पुत्र इति । षड्ढि[6] प्राणो-ऽपानो व्यानस्समानोऽपान उदानः ॥७॥ स उ एव सप्तपुत्र इति सप्त ह्वीमे शीर्षण्याः प्राणाः ॥८॥ स उ एव नवपुत्र इति सप्त हि शीर्षण्याः प्राणा द्वाववाञ्चौ ॥९॥ स उ एव दशपुत्र इति । सप्त-शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः ॥१०॥ स उ एव बहुपुत्र इति । एतस्य हीदं सर्वाः प्रजाः ॥११॥ एतं ह स्म वैतद्दद्वीर्थ विद्वांसः पूर्वब्राह्मणाः कामागायिन[11] आहुः कति ते पुत्रानागास्याम इति ॥१२॥२५॥

त्रिंशेऽनुवाके पूर्णः खण्डः ।

स यदि ब्रूयादेकं[1] मा गायेति प्राण उद्गीथ इति विद्वानेकं मनसा ध्यायेत् । एको हि प्राणः । एकोहाऽस्याऽऽजायते ॥१॥ स यदि ब्रूयाद्द्वौ म आगायेति प्राणउद्गीथ इत्येव विद्वान्द्वौ मनसा ध्यायेत्। द्वौ[2] हि प्राणापानौ[3] द्वौ हैवाऽस्याऽऽजायेते ॥२॥स यदि ब्रूयात्त्रीन्मा आ-गायेति प्राणउद्गीथ इत्येव विद्वांस्त्रीन्मनसा ध्यायेत्। त्रयो हि प्राणो

6—ना । ७ मसि । ८-श्र, । ९ बहुपुत्र । १० दश, दशम ।
११—गिन ॥

१ येक—। २ त्रयो । ३ 'व्यानः' अधिक है । ४ 'स हैवास्याऽऽजा-यन्ते' अधिक है । ५ मन ।

ऽपानोऽदान[६]। त्रयो हैवाऽस्याऽऽजायन्ते ॥३॥ स यदि ब्रूयाच्चतुरो म आगायेति प्राण उद्गीथ इत्येव विद्वांश्चतुरो मनसा ध्यायेत्। चत्वारो हि प्राणोऽपानो व्यानस्समान[६]। चत्वारो हास्याऽऽजायन्ते ॥४॥ स यदि ब्रूयात्पञ्च म आगायेति प्राण उद्गीथ इत्येव विद्वान्पञ्च मनसा ध्यायेत्। पञ्च हि प्राणोऽपानो व्यानस्समानोऽदानः। पञ्च हैवाऽस्याऽऽजायन्ते ॥५॥ स यदि ब्रूयात् षण्म आगायेति प्राण उद्गीथ इत्येव विद्वान् षण्मनसा ध्यायेत्। षड्[७] प्राणोऽपानो व्यानस्समानोऽपान उदानः। षड्ढैव[८]ऽस्याऽऽजायन्ते ॥६॥ स यदि ब्रूयात्सप्त म आगायेति प्राण उद्गीथ इत्येव विद्वान् सप्त मनसा ध्यायेत्। सप्त हीमे शीर्षण्याः प्राणाः। सप्त हैवाऽस्याऽऽजायन्ते ॥७॥ स यदि ब्रूयान्नव म आगायेति प्राण उद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ। नव हैवाऽस्याऽऽजायन्ते ॥८॥ स यदि ब्रूयाद्दश म आगायेति प्राण उद्गीथ इत्येव विद्वान्दश मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः। दश हैवाऽस्याऽऽजायन्ते ॥९॥ स यदि ब्रूयात्सहस्रं म आगायेति प्राण उद्गीथ इत्येव विद्वान् सहस्रं मनसा ध्यायेत्। सहस्रं हैत आदित्यरश्मयः। ते[१०]ऽस्य पुत्राः। सहस्रं हैवाऽस्याऽऽजायन्ते ॥१०॥ एवं हैतमुद्गीथ[११]

६ नास्ति। स यदि ७ व्यानस्य। ७ प्रा। ८ हे। ९ द्रा। १० त। ११ ह।

म्यर आह्णारः कक्षीवाँस्त्रसदस्युरिति पूर्वे महाराजाः श्रौत्रियास्सह-[12] स्रपुत्रमुपनिपेदुः । ते ह सर्व एव सहस्रपुत्रा आसुः ॥११॥ स य[13] एवैवं वेद सहस्रं हैवाऽस्य पुत्रा भवन्ति ॥१२॥ २।८॥

द्वितीयेऽनुवाके चतुर्थं खण्ड । द्वितीयोऽनुवाकस्समाप्त ।

---

शर्यातो[1] वै मानवः प्राच्यां स्थल्यामयजत[2][3] । तस्मिन् ह भूता-न्युद्गीथेऽपित्वमीपिरे[4][5] ॥१॥ तं देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन्नयं त उद्गायत्विति । वस्नेनाऽऽजद्विषेण[6] पितरो दक्षिणतोऽयं[7] त उद्गायत्वित्युशनसा काव्येनाऽसुराः[8][9] पश्चादयं[10] त उद्गायत्विति अयास्येनाऽऽङ्गिरसेन[11] मनुष्या उत्तरतो-ऽयं त उद्गायत्विति ॥२॥ स हैनांश्चक्रे[12] हन्तैनान् पृच्छानि कियतो[13] वा एक ईशे कियत एकः कियत एक इति ॥३॥ स होवाच बृहस्पतिं[13] यन्मेत्वमुद्गायेः किं ततस्स्यादिति[14] ॥४॥ स[15] होवाच देवे-ष्वेव श्रीमस्याद्देवेष्वीशा स्वर्गमुत्वां लोकं गमयेयमिति ॥५॥ अथ होवाच वस्नमाजद्विषं यन्मेत्वमुद्गायेः किं ततस्स्यादिति ॥६॥ स

---

१२ ॲन् । १३ यद् ।

१ शॅर्या– २ स्थल्याम । ३ मजॉयत । ४ ऽपिसमम । ५ ऐशिरे । ६ विस्न– । ७ दक्षणतो । ८ कांव्येना । ९–रां १० दयात । ११ अयांस्येना, अयहिस्येना । १२ क्रिय । १३ ति । १४ थ्रिथम् मधिय: दे । १५ नास्ति, स होवाच ' ... " ततस्स्यादिति ।

होवाच पितृष्वेव श्रीस्स्यात्पितृष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ॥७॥ अथ होवाचोशनसं काव्यं[16] यन्मे[17] त्वमुद्गायेः किं ततस्स्यादिति ॥८॥ स होवाचाऽसुरेष्वेव श्रीस्स्यादसुरेष्वीशा स्वर्गमु[18] त्वां लोकं गमयेयमिति ॥९॥ अथ होवाचाऽयास्यमाङ्गिरसं यन्मे त्वमुद्गायेः[19] किं ततस्स्यादिति ॥१०॥ स होवाच देवानेव देवलोके दध्याम्[20] मनुष्यान्मनुष्यलोके पितॄन्[21] पितृलोके नुदेयाऽस्माल्लोकादसुरान्[22] स्वर्गमु त्वां लोकं गमयेयमिति ॥११॥२॥७॥

तृतीयेऽनुवाके प्रथम खण्डः।

स होवाच त्वं मे भगव उद्गाय य एतस्य सर्वस्य यशो[1][ऽसी]ति ॥१॥ तस्य हाऽयास्य एवोज्जगौ । तस्मादुद्गाता हत उत्तरतो निवेशनं लिप्सेत । एतद्ध नाऽऽरूद्ध निवेशनं यदुत्तरतः ॥२॥ उत्तरत आगतो यास्य आङ्गिरसश्शर्यातस्य[4] मानवस्योज्जगौ । स प्राणेन देवान्देवलोके ऽदधादपानेन मनुष्यान्मनुष्यलोके व्यानेन पितॄन् पितृलोके हिङ्कारेण वज्रेणाऽस्माल्लोकादसुराननुदत ॥३॥ तान् होवाच दूरं गच्छतेति । स दूरो ह नाम लोकः। तं ह जग्मुः। त एतेऽसुरा असम्भाव्यम्[3] पराभूताः ॥४॥ छन्दोभिरेव पाप्मा

१६ य । १७ जे । १८–गाः । १९ त्वं । २०–ध्यात् । २१–तॄन् । २२ 'उ' अधिक है । २३ हे ॥

१–शस । २–तून । ३ असंहेयम–।

शय[4]तिम्मानवं स्वर्गं लोकं गमयांचकार ॥५॥ ते होचुरसुरा एत तं वेदाम यो नोऽयामित्थमघ[5]तीति । तत आगच्छन्[6] । तमेताऽपश्यन् ॥६॥ तेऽब्रुवन्नयं वा आस्य इति । यदब्रुवन्नयं वा आस्य इति तस्मादयमास्यः । अयमास्यो[7] ह वै नामैषः । तमयास्य इति परोक्षमाचक्षते ॥७॥ स प्राणो वा अयास्यः । प्राणो ह वा एनान् स नुनुदे ॥८॥ स य एवं विद्वानुद्गायति प्राणेनैव देवान्देवलोके दपालपानेन[9] मनुष्यान्मनुष्यलोके[10] व्यानेन पितॄन्[1] पितृलोके हिङ्कारेणैव[1] वज्रेणाऽस्माल्लोकाद्द्विषन्तम्भ्रातृव्यं नुदते ॥९॥२।८॥

तृतीयेऽनुवाके द्वितीय खण्ड ।

तं ह भूयादूदूरं गच्छेति । स यमेव लोकमसुरा अगच्छंस्तं हैव[1] गच्छति ॥१॥ छन्दोभिरेव वाचा यजमानं स्वर्गं लोकं गमयति ॥२॥ ता एता व्याहृतयः[2] । भेसोति वाग्[इति]भूर्भुवस्स्वरित्य[उदिति]॥३॥ सयत्सेति त[3]स्मात्सदयं लोकस्तदिमं लोकमस्मिँल्लोक आभजति ॥४॥ एसयानसदसौ लोकस्तदमुं लोकममुष्मिँल्लोक आभजति ॥५॥ वागिति तद्ब्रह्म तदिदमन्तरिक्षम ॥६॥ भूर्भुवस्स्वरिति सा त्रयी-विद्या ॥७॥ उदिति सोऽसावादित्यः । तयदुदित्युदिव श्रेय-

---

४ दॅय्या-। ५ स। ६-छस्। ७-असो। ८ पान्-। ९ पहिंस्-। १०-पान्॥

१-धा। २ स्या-। ३ सत्।

यति[४] ॥८॥ तद्यदेकमेवाऽभिसम्पद्यते तस्मादेकवीरः । एको ह तु सन्वीरो वीर्यवान् भवति । आहाऽस्यैको[५] वीरो वीर्यवान्[६] जायते य एवं वेद ॥९॥ तद्ध होवाच शाट्यायनिर्ब्रह्मपुत्र एष उद्गीथ[७] इत्ये-वोपासितव्यम् । बहवो ह्येत आदित्य[८] रश्मयस्ते[९]ऽस्य पुत्राः । तस्मा-द्ब्रह्मपुत्र एष उद्गीथ इत्येवोपासितव्यमिति ॥१०॥२।९॥

तृतीयेऽनुवाके तृतीय खण्ड । तृतीयोऽनुवाकस्समाप्तः ।

---

देवासुरास्समयतन्तेत्याहुः । न ह वै तद्देवासुरास्सम्येतिरे । प्रजापतिश्च ह वै तन्मृत्युश्च सम्येताते ॥१॥ तस्य ह प्रजापतेर्देवाः प्रियाः[१] पुत्रा अन्त आसुः । तेऽब्रियन्त केनोद्गात्रा दीक्षामहै येना-ऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥२॥ तेऽब्रुवन्वा-चोद्गात्रा दीक्षामहा इति ॥३॥ ते वाचोद्गात्राऽदीक्षन्त । तेभ्य[२] इदं वागागायद्यदिदं वाचा वदति यदिदं वाचा भुञ्जते ॥४॥ ताम्पाप्माऽन्वसृज्यत । स यदेव वाचा पापं वदति स एव स पाप्मा ॥५॥ तेऽब्रुवन् न वै नोऽयम्मृत्युं न पाप्मानमत्यवादीत्[३] । मनसोद्गात्रा दीक्षामहा इति ॥६॥ ते मनसोद्गात्रा दीक्षन्त । तेभ्य इदम्मन

---

४ इयेष्-।५-ए।६-यावान्।७-ए(इत्य)।८ आदित्यंस्य।९त॥

१-याय।२ 'नोद्गात्रा दीक्षामहा इति' अधिक है पर 'ते' और 'भ्य' के बीच लाल रङ्ग से काटा गया है।३ अवत्य्-।

आगायद्यदिदम्मनसा ध्यायति यदिदम्मनसा भुञ्जते ॥७॥ तत्पाप्माऽन्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥८॥ तेऽब्रुवन्नोन्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । चक्षुषोद्गात्रा दीक्षामहा इति ॥९॥ ते चक्षुषोद्गात्राऽदीक्षन्त । तेभ्य इदं चक्षुरागायद्यदिदं चक्षुषा पश्यति यदिदं चक्षुषा भुञ्जते ॥१०॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पापम्पश्यति स एव स पाप्मा ॥११॥ तेऽब्रुवन्नोन्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥१२॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त । तेभ्य इदं श्रोत्रमागायद्यदिदं श्रोत्रेण शृणोति यदिदं श्रोत्रेण भुञ्जते ॥१३॥ तत्पाप्माऽन्वसृज्यत । स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥१४॥ तेऽब्रुवन्नोन्वाव नोऽयं[४] मृत्युं न पाप्मानमत्यवाक्षीत्[५] । प्राणेनोद्गात्रा दीक्षामहा इति ॥१५॥ ते प्राणेनोद्गात्राऽदीक्षन्त । तेभ्य इदं प्राण आगायद्यदिदं प्राणेन प्राणिति यदिदं प्राणेन भुञ्जते ॥१६॥ तत्पाप्माऽन्वसृज्यत । स यदेव प्राणेन[ पापं ]प्राणिति स एव स पाप्मा ॥१७॥ तेऽब्रुवन्नोन्वाव नो[६]ऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति ॥१८॥ तेऽनेन

४-त्यु । ५ 'म' अधिक है । ६ ने ।

मुख्येन प्राणेनोद्गात्राऽऽदीचन्त ॥१६॥ सोऽब्रवीन्मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति ॥२०॥ न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति ॥२१॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन्। अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥२२॥२।१०॥

चतुर्थेऽनुवाके प्रथम खण्डः।

स यथा हत्वा ममृध्याऽतीयादेवमेवैतम्मृत्युमत्यायन् ॥१॥ स वाचम्प्रथमामत्यवहत्। ताम्परेण मृत्युं न्यदधात्। सोऽग्निरभवत् ॥२॥ अथ मनोऽत्यवहत्। तत्परेण मृत्युं न्यदधात्। स चन्द्रमा अभवत् ॥३॥ अथ चक्षुरत्यवहत्। तत्परेण मृत्युं न्यदधात्। स आदित्योऽभवत् ॥४॥ अथ श्रोत्रमत्यवहत्। तत्परेण मृत्युं न्यदधात्। ता इमा दिशोऽभवन्। ता उ एव विश्वे देवाः ॥५॥ अथ प्राणमत्यवहत्। तम्परेण मृत्युं न्यदधात्। स वायुरभवत् ॥६॥ अथाऽऽत्मने केवलमेवाऽन्नाद्यमागायत् ॥७॥ स एष

---

७-यम। ८ गमयन्।

१ स अधिक है, 'अत्यायन्' के स्थान में-यत्। २-यु। ३-न्। ४ द्या।

एवाऽयास्यः । आस्ये[5] धीयते[6] । तस्मादयास्यः । यद्वेवा[7] [ऽयम्] आस्य[8] रमते तस्माद्वेवाऽयास्यः[9] ॥८॥ स एष एवाऽऽङ्गिरसः । अतो हीमान्यङ्गानि रसं लभन्ते । तस्मादाङ्गिरसः[10] । यद्वेवैषा-मङ्गानां रसस्तस्मा द्वेवाऽऽङ्गिरसः ॥९॥ तं देवा अब्रुवन् केवलं वा आत्मनेऽन्नाद्यमागासीः । अनु न एतस्मिन्ननाद्य आभज[11] । एतदस्याऽनामयत्वमस्तीति[12][13] ॥१०॥ तं वै प्रविशतेति । स वा आकाशान्[14] कुरुष्वेति । स इमान् प्राणानाकाशानकुरुत[15][16] ॥११॥ तं वागेव भूत्वाऽग्निः प्राविशन्मनो[18] भूत्वा चन्द्रमाश्चक्षुर्भूत्वा ऽऽदित्यश्श्रोत्रम्भूत्वा दिशः प्राणो भूत्वा वायुः ॥१२॥ एषा वै दैवी परिषद्दैवी सभा दैवी संसद् ॥१३॥ गच्छति ह वा एतां[17] दैवीम्परिषदं दैवीं सभां दैवीं[18] संसदं य एवं वेद ॥१४॥२।१२॥

चतुर्थेऽनुवाके द्वितीयः खण्डः ।

यत्रो ह वैक चैता[1] देवता निस्सृशन्ति न हैव तत्र कश्चन पाप्मान्यङ्गः परिशिष्यते ॥१॥ स विद्यान्नेह कश्चन पाप्मान्यङ्गः परिशेक्ष्यते[2] सर्वमेवैता[3][4] देवताः पाप्मानं निघ्नन्त्यन्तीति । तथा हैव

---

५ प्रास्ते । ६ ध्यति । ७ यगॅ । ८ स्ये । ९-ंऽयास्य । १० ग्रँड-। ११ प्रः । १२ ग्रामयत्वम । १३ ग्रसी । १४ ग्राकाशात् । १५ ग्राशासनम । १६ कुरुत । १७ '-ं' नास्ति । १८ प्रैवी-॥

१ चे । २ क्षते । ३ पयम । ४ एता ।

भवति ॥२॥ य उ ह वा एवंविद[5]मृच्छति[6] यथैता देवता ऋत्वा नीयादेवं न्येति[7]। एतासु हैनेनं देवतासु प्रपन्नमेतासु वसन्तमुप-वदति ॥३॥ तस्य हैतस्य नैव काचनाऽऽर्तिरस्ति[8] य एवं वेद। य एवैनमुपवदति स आर्तिमार्च्छति[9] ॥४॥ स य एन[10]मृच्छादेव तादेवता उपद्रुत्य ब्रूयादयम्याऽऽरत्[11] स इमामार्ति[12] न्येत्विति। तां हैवाऽऽर्ति न्येति ॥५॥ यावद्वावासा[13] उ हाऽस्येमे प्राणा अस्मिँल्लोक एतावदा-वासा[13] उ हाऽस्यैता देवता अमुष्मिँल्लोके भवन्ति ॥६॥ तस्मादु हैवं विद्वाँसैवाऽगृहतायै[14] बिभीयादश्लोकतायै। एता मे देवता अस्मिँल्लोके गृहान् करिष्यन्ति। एता अमुष्मिँल्लोके[15] भवन्ति। तस्मादु लोकम्प्रदास्यन्तीति[16] ॥७॥ तस्मादु हैवं विद्वाँसैवाऽगृहतायै बिभीयादश्लोकतायै। एता मे देवता अस्मिँल्लोके गृहेभ्यो गृहान् करिष्यन्ति स्वेभ्य[17] आयतनेभ्य इति हैव विद्याद् [एता] देवता[18] अमुष्मिँल्लोके लोकम्प्रदास्यन्तीति ॥८॥ तस्मादु हैवं

---

५-विद् या विद। ६ दुच्छति। ७ नेति। ८-तीर्। ९ आच्छति। १० एम। ११ यात्। १२ अन्ति। १३-दावशा। १४ ग्रह-। १५ असिमज्। १६ प्रयदा-। १७ 'आयतनेभ्य' अधिक है। १८ एव ता ॥

विद्वान्नैवाऽस्पृहतायै विभीयाला्ऽलोकतायै एता म एतदुभयं संनंस्पन्तीति हैव बियात् । तथा हैव भवति ॥६॥२॥१२॥

चतुर्थेऽनुवाके तृतीय खण्डः । चतुर्थोऽनुवाकस्समाप्तः ।

---

देवा वै ब्रह्मणो वत्सेन[1] वाचमदुहन् । अग्निर्वै ब्रह्मणो वत्सः ॥१॥ सा या सावाग्ब्रह्मैव तत् । अथ योऽग्निर्मृत्युस्सः ॥२॥ तामेतां वाचं यथा धेनुं वत्सेनोपसृज्य[2] मर्त्यां दुहीतैवमेव देवा वाचं सर्वान्कामानदुहन्[3] ॥३॥ दुहे ह[4] वै वाचं सर्वान्कामान्य एवं वेद । स हैषोऽनानृतो वाचं देवीमुदिन्धे[5] वद वद वदेति ॥४॥ तयादिह[6] पुरुषस्य पापं कृतम्भवति तदाविष्करोति । यदिहैनदपि रहसीव कुर्वन्मन्यते[7][8]ऽथ हैनदाविरेव करोति । तस्माद्वाव पापं न कुर्यात्[9] ॥५॥२॥१३॥

पञ्चमेऽनुवाके प्रथमः खण्डः ।

एष उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्निः ॥१॥ तं साधूपचरेत् । य एनमस्मिँल्लोके साधूपचरति[1] तमेषोऽमुष्मिँल्लोके

---

१ वत्सेन, वत्सेन । २ वच्च- । ३-२ । ४ जहे । ५ उदिन्धे । ६ यमिह । ७-त । ८ अथ्- । ९ 'एष उ ह वा' दूसरे अनुवाक का यहां अधिक है ॥

१ चरति ।

साधूपचरति । अथ य एनमस्मिँलोके नाऽऽद्रियते तमेषोऽमुष्मिँ-
ल्लोके नाऽऽद्रियते । तस्माद्वा अग्निं साधूपचरेत् ॥२॥ तं नैव
हस्ताभ्यां स्पृशेन्न पादाभ्यां न दण्डेन[2] ॥३॥ हस्ताभ्यां स्पृशति
यदस्याऽन्तिकमननेनिक्ते । अथ यदभिप्रसारयति तत्पादा-
भ्याम् ॥४॥ स एनमास्पृष्ट ईश्वरो दुर्धायां धातोः । तस्माद्वा
अग्निं साधूपचरति । सुधायां हैवैनं दधाति ॥६॥२।१.४॥

पञ्चमेऽनुवाके द्वितीय खण्ड ।

एष उ ह वाव देवानाम्महाशनतमो यदग्निः ॥१॥ तम्
[1]त्यमद्[2]दानोऽश्नीयात् । यो वै महाशनेऽनभ्यश्नातीश्वारो हैनम-
भिप[3]ङ्क्तोः । पू[4]तिमि[5]व ह्यऽश्नीयात्[6] ॥२॥ अथो ह मोक्तेऽशने ब्रूयात्
समिन्स्वाऽग्निमिति । स यथा भोक्तेऽशने श्रेयाँसम्परिवेष्टवं
ब्रूयात्तादृक् त[7]त् ॥३॥ एतद् ह वाव साम यद्वाक् । यो वै चक्षु-
स्साम श्रोत्रं सामेत्युपास्ते न[8] ह तेन करोति ॥४॥ अथ य[9]
आदित्यस्साम चन्द्रमास्सामेत्युपास्ते न[8] हैव तेन करोति ॥५॥
अथ यो वाक् सामेत्युपास्ते स एवाऽनुष्ठया साम वेद । वाचा हि

---

२ तण्डेनम, तर्ण्डेनम ।

१ प्र-। २ दक्षासीनो । ३ प्रमिष्( ष्प )केत्ताः । ४-इद् । ५ इवमिव । ६ ऽम्री-। ७ तम । ८ ना । ९ यद् ।

साम्नाऽऽर्त्विज्यं क्रियते ॥६॥ स यो वाचस्स्वरो जायते सोऽग्निर्वाग्घैव वाक् । तदे[10]कधा साम भवति ॥७॥ स य एवमेतदेकधा साम भवेद्वेदैवं हैतदेकधा साम भवतीत्येकधैव श्रेष्ठस्स्वानाम्भवति ॥८॥ तस्मादु हैवंविदमेव साम्नाऽऽर्त्विज्यं कारयेत । स ह वाव साम वेद य एवं वेद ॥९॥२।१।५॥

पञ्चमेऽनुवाके तृतीयः खण्डः । पञ्चमोऽनुवाकस्समाप्तः ॥

---

१० एक—।

# [ तृतीयोऽध्यायः । ]

एका ह वाव कृत्स्ना देवताऽर्धदेवता एवाऽन्याः । अयमेव योऽयम्पवते ॥१॥ एष एव सर्वेषां देवानां ग्रहः ॥२॥ स हैषोऽस्तं नाम । अस्तमिति हेह पश्चा[1]द्ग्रहानाचक्षते ॥३॥ स यदादित्योऽस्तमगादिति ग्रहानगादिति हैतत् । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥४॥ अस्तं चन्द्रमा एति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥५॥ अस्तं नक्षत्राणि यन्ति । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥६॥ अन्वग्निर्गच्छति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥७॥ एत्यहः । एति रात्रिः[2] । तेन ते असर्वे । ते एतमेवा[3]ऽपीतः ॥८॥ मुह्यन्ति दिशो न वै ता[4] रात्रिम्प्रज्ञायन्ते । तेन ता असर्वाः । ता एतमेवाऽपियन्ति ॥९॥ वर्षति च पर्जन्य उच्च गृह्णाति । तेन सोऽसर्वः[5] । स एतमेवाऽप्याति ॥१०॥ क्षीयन्त आप एवमोषधय[6] एवं वनस्पतयः । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥११॥ तद्यदेतत्सर्वं वायुमेवाऽप्येति तस्माद्वा-

---

१ पँचा । २-र. । ३-ताः । ४ तां । ५ 'स साम वेद' अधिक है । ६ एवृ-, ओषा-।

प्राण एव साम ॥१२॥ स ह वै सामवित्स [कृत्स्नं] साम वेद य एवं वेद ॥१३॥ अथाऽध्यात्मम् । न वै स्वपन् वाचा वदति । सेयमेव प्राणमप्येति ॥१४॥ न मनसा ध्यायति । तदिदमेव प्राणमप्येति ॥१५॥ न चक्षुषा पश्यति । तदिदमेव प्राणमप्येति ॥१६॥ न श्रोत्रेण शृणोति । तदिदमेव प्राणमप्येति ॥१७॥ तद्यदेतत्सर्वं प्राणमेवाऽभिसमेति तस्मात्प्राण एव साम ॥१८॥ स ह वै सामवित्स कृत्स्नं साम वेद य एवं वेद ॥१९॥ तद्यदिदमाहुर्न पताऽद्य वातीति[स] हैतत्पुरुषेऽन्तर्निरमते स पूर्णस्स्वेदमान आस्ते ॥२०॥ तद्ध शौनकं च कापेयमभिप्रतारिणं च[काक्षसेनिम्] ब्राह्मणः परिवेविष्यमाणा उपावव्राज ॥२१॥३॥१॥

प्रथमेऽनुवाके प्रथमः खण्डः ।

तौ ह विभिक्षे । तं ह नाऽऽददतुः को वा कोऽयमिति मन्यमानौ ॥१॥ तौ होपजगौ ।

महात्मनश्चतुरो देव एकः कस्स जगार भुवनस्य गोपाः ।
त कापेय न विजानन्त्येकेऽभिप्रतारिन् बहुधा निविष्टम् ॥

---

—७ प्राण । ८-यति । ९-भिने । १०-णा । ११-काद्य १२ विष्या-। १३-प्राजा ॥

१ भिक्ष- । २ ददते । ३ सो । ४ कालुपेय । ५ निविष्टम् ।

इति ॥२॥ स होवाचाऽभिमतारीमं[6] वाव[7] प्रपद्य प्रतिब्रूहीति । त्वया[8] वा[9] अयम्प्रत्युच्य[10] इति[11] ॥३॥ तं ह प्रत्युवाच[12]—

आत्मा देवानामुत मर्त्यानां[13] हिरण्यदन्तो रपसो[14] न सूनुः[15] ।
महान्तमस्य महिमानमाहुरनद्यमानो[16] यदद[17] नमत्ति[18][19] ॥

इति ॥४॥ महात्मनश्चतुरो [देव] एक इति । वाग्वा[20] अग्निः[21] । स महात्मा देवः । स यत्र स्वपिति[22] तद्वाचम्प्राणो गिरति ॥५॥ मनश्चन्द्रमास्स महात्मा देवः । स यत्र स्वपिति तन्मनः[23] प्राणो गिरति ॥६॥ चक्षुरादित्यस्स[24] महात्मा देवः । स यत्र स्वपिति तच्चक्षुः प्राणो गिरति ॥७॥ श्रोत्रं दिशस्ता[25] महात्मानो देवाः । स यत्र स्वपिति तच्छ्रोत्रं प्राणो गिरति ॥८॥ तद्यन्महात्मनश्चतुरो देव एक इत्येतद्ध तत् ॥९॥ कस्स[26] जगारेति[27][28] । प्रजापतिर्वै कः । स हैतज्जगार ॥१०॥ भुवनस्य गोपा इति । स उ वाव भुवनस्य गोपाः ॥११॥ तं कापेय[29] न विजानन्त्येक इति । न ह्येतमेके विजानन्ति ॥१२॥ अभिप्रतारिन् बहुधा निविष्टमिति । बहुधा ह्येष निविष्टो यत्प्राणः ॥१३॥ आत्मा देवानामुत[30] मर्त्यानामिति । आत्मा ह्येष देवाना-

---

६ म(अ)म, मा । ७ घय्या, यय्या । ८ अया । ९ वाय । १०–युध्ये । ११ उति । १२–याच । १३ मत्य्– । १४ परसो । १५ [illegible] । १६ मभि– । १७ यदि । १८ दतम, दँतम । १९ घँति । २० पाश, घा । २१ था । २२ स्यतिपिति । २३–न, इस के पश्चात् प्रा । २४–अर् । २५ महात्मा अधिक है । २६ क । २७ सो । २८ जगॅर– । २९–पध । ३०–ष्मो ।

मुत मर्त्यानाम् ॥१४॥ हिरण्यदन्तो रपसो[२९] न[३०] सनुरिति । न ह्येष सनुः । सनुर्न्वा[३१] ह्येष सन्न[३२] सनुः ॥१५॥ महान्तमस्य महिमानमाहुरिति । महान्तं ह्येतस्य[३३] महिमानमाहुः[३४] ॥१६॥ अनद्यमानो यदद्न्तमत्तीति[३५] । अनद्यमानो ह्येषोऽदन्तमत्ति ॥१७॥३।२॥

प्रथमेऽनुवाके द्वितीयः खण्डः ॥

तस्यैष श्रीरात्मा समुदूढो[१] यदसावादित्यः । तस्माद्ब्राह्मणस्य स्तोत्रे वाऽवान्यानेच्छया अनाह्रिया[२] इति ॥१॥ स एष एवोक्थम् । यत्पुरस्तादवानिति[३] तदेतदुक्थस्य शिरो यद्दक्षिणतस्स[४] दक्षिणः पक्षो यदुत्तरतस्स[५] उत्तरः पक्षो यत्पश्चात्[तत्]पुच्छम् ॥२॥ अथमेव प्राण उक्थस्याऽऽत्मा । स य एवमेतमुक्थस्याऽऽत्मानमात्मन्प्रतिष्ठितं[६] वेद स हाऽमुष्मिँ लोके साङ्गस्सतनुस्[सर्वस्]सम्भवति[७] ॥३॥ अम्बद्ध वा अमुष्मिँल्लोके यदिदम्पुरुषस्याऽऽर्द्री विभं कर्णौ नासिके यत्किं चाऽनास्थिकं न सम्भवति ॥४॥ अथ य एवमेतमुक्थस्या[८][९]ऽऽत्मानमात्मन्प्रतिष्ठितं वेद स हैवाऽमुष्मिँल्लोके साङ्गस्सतनुस्सर्वस्सम्भवति॥५॥ तदेतद्वैश्वामित्रमुक्थम् । तदग्नं वै विश्वम्प्राणो मित्रम्

३१–से । ३२ नम् । ३३ स् । ३४ आहुर् । और 'इति महान्त ह्येतस्य महिमाहुः' अधिक है । ३५ अन्तम । ३६ सनूर-॥

१ समाद्ध– । २ यद्दूच– । ३ पा इति । ४–दयः । ५ सद् । ६ तद् । ७ सांगसस् । ८–तद् । ९ मक्य–।

॥६॥ तद् विश्वामित्रश्श्रमेण तपसा व्रतचर्येण[10]न्द्रस्य प्रियं धामो-
पजगाम ॥७॥ तस्मा उ हैतत्प्रोवाच यदिदम्[11]मनुष्यानागतम् ॥८॥
तद् स उपनिषसाद् ज्योतिरेतदुक्थ[12]मिति ॥९॥ ज्योतिरिति द्वे
अक्षरे प्राण इति द्वे अन्नमिति द्वे। तदेतदन्न एव प्रतिष्ठितम् ॥१०॥
अथ हैनं जमदग्निरुपनिषसादाऽऽयु[13]रेतदुक्थमिति ॥११॥ आयुरिति
द्वे अक्षरे प्राण इति द्वे अन्नमिति द्वे। तदेतदन्न एव प्रतिष्ठितं ॥१२॥
अथ है[14]नं वसिष्ठ उपनिषसाद गौरेतदुक्थमिति। तदे[15]तदन्नमेव।
अन्नं हि गौः ॥१३॥ तदाहुर्यदस्य प्राणस्य पुरुषश्शरीरमथ केना-
[16]ऽन्ये प्राणाश्शरीरवन्तो भवन्तीति ॥१४॥ स ब्रूयाद्यद्वाचा वदति
तद्वाचश्शरीरं यन्मनसा ध्यायति तन्मनसश्शरीरं यच्चक्षुषा पश्यति
तच्चक्षुषश्शरीरं यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरम्। एवमु
हाऽन्ये प्राणाश्शरीरवन्तो भवन्तीति ॥१५॥३॥३॥

प्रथमेऽनुवाके तृतीयः खण्डः।

यदेतदुक्थं सप्तविधम्। शस्यते स्तोत्रियो[1]ऽनुरूपो धाय्या
प्रगाथस्सूक्तं निविद्परिधानीया[2] ॥ १ ॥ इयदे[3]व स्तोत्रियो

---

१० प्र- ११ तद्। १२ उक्थ-। १३ (-साद) गोर्, आयुर्गौर्।
१४-व्। १५ उ.देद्। १६ ऽन्येन।

१ प्रगाथ् अधिक है। २-नीयम्। ३ नास्ति।

अग्निरनुरूपो वायुर्धाय्याऽन्तरिक्षम्प्रगाथो द्यौस्सूक्तमादित्यो निवित्। तस्माद्बह्वृचा उदिते निविदमधीयन्ते । आदित्यो हि निवित् । दिशः परिधानीयेत्यधिदैवतम् ॥२॥ अथाध्यात्मम् । आत्मैव स्तोत्रियः प्रजाऽनुरूपः प्राणो धाय्या मनः प्रगाथश्शिरस्सूक्तं चक्षुर्निविच्छ्रोत्रम्परिधानीया ॥३॥ तद्धैतदेके त्रिष्टुभा परिदधत्यनुष्टुभैके । त्रिष्टुभात्वेव परिदध्यात् ॥४॥ तद्धैतदेक एता व्याहृतीरभिव्याहृत्य शंसन्ति महान्मह्या समधत्त देवो देव्या समधत्त ब्रह्म ब्राह्मण्या समधत्त । तपस्तमधत्त समधत्तेति ॥५॥ तस्मादिदानीम्पुरुषस्य शरीराणि प्रतिसंहितानि । पुरुषो ह्येतदुक्थम् ॥६॥ महान्मह्या समधत्तेति । अग्निर्वै महानियमेव मही ॥७॥ देवो देव्या समधत्तेति । वायुर्वै देवोऽन्तरिक्षं देवी ॥८॥ ब्रह्म ब्राह्मण्या समधत्तेति । आदित्यो वै ब्रह्म द्यौर्ब्राह्मणी ॥९॥ तासां वा एतासां देवतानां द्वयोर्द्वयोर्देवतयोर्नव-नवाऽक्षराणि सम्पद्यन्ते एतादिमे लोकास्त्रिणवा भवन्ति ॥१०॥ तद्ब्रह्म वै मिदव । तद्ब्रह्माऽभिव्याहृत्य शंसन्ति । एष उ एव सोमस्सोऽनुचरः ॥११॥

---

४ दास्या, दार्य्या । ५ प्राण्-। ६ धार्य्या । ७-धानी-। ८ तदुक्थम् अधिक है (द्रादिश में)?। ९-य। १०-मह्या। ११ इदानि। १२-या। १३-मी। १४-यो। १५-श्री। १६-की। १७ पा। १८ स्त।

यदिममाहुरेकस्तोम इत्ययमेव योऽयम्पवते । एषोऽधिदेवतम् । प्राणोऽध्यात्मम् । तस्य शरीरमनुचरः[19] ॥१२॥ तद्यथा ह वै मणौ मणिसूत्रं सम्प्रोतं स्याद्—॥१३।३।४॥

प्रथमेऽनुवाके चतुर्थ खण्ड ।

[1]—एवं हैतस्मिन्सर्वमिदं सम्प्रोतं गन्धर्वाप्सरसः पशवो मनुष्याः ॥१॥ तद्ध सुश्रवस्[2]सामश्रवसः[3] मयये[4] । तस्मै ह श्वाजनिर्वैद्यः मेधाय[5] ॥२॥ तस्य हाऽन्तरिक्षात्पतित्वा नवनीतपिण्ड उरसि निपपात । तं हाऽऽदायाऽनुदयौ[6] ॥३॥ ततो हैव स्तोमं[7] ददर्शाऽन्तरिक्षे विततम्बहुशोभमानम् । तस्यो ह युक्तिं[8] ददर्श ॥४॥ बहिष्पवमानमासद्य दीत्र[9] विधि प्राणय इति कुर्यात् दीत्र[9] गृहित्र[10] अपान्य इति वाच । दिदृक्षैवाऽस्तिभ्यं शुश्रूषैव कर्णाभ्याम् । स्वयमिदम्मनोयुक्तम् ॥५॥ तद्यत्र वा इषुरत्यग्रो भवति न वै स ततो हिनस्ति[11] तदु[12] वा एतं नोपाप्नुयात् । प इत्येवाऽपान्यात् । तद्यथा विम्बेन मृगपानयेदेवमेवैनमेतया देवतयाऽऽनयति । स युक्तः करोति[13] । एष एनापि[14] युक्तः ॥६।३।५॥

प्रथमेऽनुवाके पञ्चमः खण्ड । प्रथमोऽनुवाकस्समाप्त ॥

---

१९—रन्तम॥

१ एवम् (एवा) के पहले पञ्चम कं० का द्वि० वाक्य । २ मौञ्ज—। ३ साहश—। ४ तमस्मै । ५ मेधाय । ६ ततो ७—म । ८—इ । ९ दीन्त्र, पहला अक्षर ळ भी हो । १०गृहित्व । ११अस्ति । हनस्ति । १२यद् । १३—न्तो । १४—ति ॥

मोऽसौ साम्नः मर्त्ति[1] वेद प्र हास्मै दीयते ॥१॥ ददा[2] इति ह वा अयमग्निर्दीप्यते तथेति वायुः पवते हन्तेति चन्द्रमा ओमित्या-दित्यः ॥२॥ एषा ह वै साम्नः प्रत्तिः[3] । एतां ह वै साम्नः प्रत्तिं[4] सुदक्षिणः क्षैमिर्विदां चकार ॥३॥ तां हैतां हेतुर्वाऽन्ये गायन्त्ये-आयरुणास्य धा तां[5] ददा३[6] तथा३ हन्ता३[7] हिम्भा ओवा इति । स ह वा अस्मै दीयते ॥४॥ [सो] ऽप्यन्यान्[8] बहूनुपर्युपरि[9][10] य एवमेतां साम्नः प्रत्तिं वेद ॥५॥ य उ ह वा अबन्धुर्[11]बन्धुमत्साम वेद यत्र हाऽप्येनं न विदुर्यत्र रोपन्ति यत्र परीवघत्तते तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्[12]पर्यैति ॥६॥ अग्निर्ह वा अबन्धुर्[11]बन्धुमत्साम । कस्माद्वा ह्येनं दार्वोः कस्माद्वा पर्यावृत्य मन्थन्ति स श्रैष्ठ्याया[13]ऽऽधिपत्यायाऽन्नाद्याय पुरोधायै[14] जायते ॥७॥ स यत्र ह वा अप्येवंविदं न विदुर्यत्र रोपन्ति यत्र परीव[15]-घत्तते तद्धाऽपि श्रैष्ठ्य[11]माधिपत्यमन्नाद्यम्पुरोधाम्पर्यैति ॥८॥ ३।६॥

द्वितीयेऽनुवाके प्रथमः खण्डः ।

स्वयमु तत्र यत्रैनं विदुः ॥१॥ सुदक्षिणो ह वै क्षैमिः प्राचीनशा-लि[1]र्जाबाली ते ह सब्रह्मचारिण आसुः ॥२॥ ते हेमे[2] बहु जप्यस्य

---

१ प्रति । २ तद्दान, ददान् । ३ प्रत्ति, प्रवृत्तिः । ५ नौं । ६ 'हन्ता३' अधिक है । ७ नास्ति । ८ अप्य् । ९-हन्य । १०-उप । ११-धु । १२-धा । १३ श्रेष्ठ्- । १४-माये । १५ परि ॥

१-शालिर् । २ है ।

चाऽन्यस्य चाऽनूचिरे[३] प्राचीनशालिश्च[४] जाबालौ च ॥३॥ अथ ह स्म सुदक्षिणः[५] क्षैमिर्यदेव यज्ञस्याऽऽज्यो यत्सुविदितं तद्ध स्मैव पृच्छति ॥४॥ त उ ह वा अपोदिता व्याक्रोशमाना[६][७]श्चेरुश्शूद्रो दुरनूचान[८] इति ह स्म सुदक्षिणं क्षैमिमाक्रोशन्ति[९] प्राचीनशालिश्च[१०] जाबालौ च ॥५॥ स ह स्माऽऽह सुदक्षिणः क्षैमिर्यन्न भूयिष्ठाः कुरुपञ्चालास्समागता भवितारस्तत्र एष संवादो नाऽनुपदृष्टे शूद्रा इव संवदिष्यामह[११] इति ॥६॥ ता उ ह वै जाबालौ दिदीक्षाते[१२] शुक्रश्च गोश्रुश्च[१३]। तयोर्ह प्राचीनशालिर्हैव[१४] उद्गाता ॥७॥ स तद्ध सुदक्षिणो ऽनुबुबुधे जाबालौ हाऽदीक्षिषातामिति[१५]। स ह संग्रहीतारमुवाचा-ऽऽनयस्वाऽरे[१७] जाबालौ हाऽदीक्षिषातां[१६] तद्गमिष्याव इति ॥८॥३॥७॥

द्वितीयेऽनुवाके द्वितीय खण्डः ।

तस्य ह ज्ञातिका अश्रुमुखा इवाऽऽसुरन्यतरां वा अपसुपागादिति[१] ॥१॥ अथ ह स्म वै यः पुराब्रह्मवाद्यं वदत्यन्य-तरामुपागादिति ह स्मैनम्मन्यन्ते । अथो ह स्मैनम्मृतमिवैवोपासते ॥२॥ तं ह संग्रहीतोवाचाऽथ यद्भगवस्ते ताभ्यां न कुशलं

२ हे । ३ ऽरूच्-।४-शालाय्।५-शां । ६ व्य्-।-श्रा । ७ चोरुश्। ८-श्रा । ९ अक्रोश्-। १० स्रोश् । ११-मतिष्य-। १२ दुदी-। १३-रुश् । १४ प्र-। १५ संसं-। १६ दिदीक्ष-। १७-यास्वा ॥

१-म ।

कयेत्थमात्येति[2] ॥३॥ ओमिति होवाच गन्तव्यम्म आचार्यस्तुय-[3] मानमन्ववेति[4] ॥४॥ स ह रथमास्थाय प्रधावयांचकार । तं ह स्म प्रतीचान्ते ॥५॥ कं जानीतेति । सुदक्षिण इति । न वै नूनं स इदमभ्यवेयादिति । स एवेति ॥६॥ स ह सोपानादेवाऽन्तर्वेद्यव-स्थायोवाचाऽह्नन्वित्थं गृहपता३ इति । ते ह नाऽनूदतिष्ठा-सव[5] । स होवाचाऽनूत्थाता[6] म[7] एते । कृष्णाजिनोऽसी[ति] । तदिमे कुरुपञ्चाला अविदुरनूत्थातेव[8] त इति होचुः ॥७॥ तं ह कनीयान्भ्रातो[9]वाचा[10]ऽनुतिष्ठ[11] । भगव उद्गातारमिति । तं हा ऽनूत्तस्थौ ॥८॥ स होवाच त्रिर्वै गृहपेव पुरुषो जायते । पितुरेवाऽग्रेऽधि जायतेऽथ मातुरथ यज्ञात् ॥९॥ त्रिर्वेव[12][13][14] म्रियत[15] इति। स यद्ध वा एनमेतत्पिता योन्यां रेतो भूतं सिञ्चति-॥१०॥१॥८॥

द्वितीयेऽनुवाके तृतीयः खण्डः ।

—तत्प्रथमम्म्रियते ॥१॥ अन्धमिव[1] वै तमो योनिः । लोहि-तस्तोको[2] वा वै स तदामत्स्यपां वा स्तोकः । किं हि स तदा-भवति ॥२॥ स यस्तां देवतां वेद यां च स[3] ततोऽनुसम्भवति या

---

२ तू-। ३ आर्येर्-। ४ सुय्-। ५-ष्ठम् । ६-ऊद्धा-। ७ म। ८ 'इति' अधिक है। ९ भ्राता। १० वा । ११ अनुतिष्ठ । १२ भिर्। १३ अ, ऊ। १४ नास्ति। १५ त्रियत ॥

१ अन्ध्-। २ यो । ३ म ।

चैनं[4] तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥३॥ अथ य एनमेतद्दीक्षयन्ति[5] तद्द्वितीयम्म्रियते । वपन्ति केशश्मश्रूणि । निकृन्तन्ति नखान् । प्रत्यञ्जन्त्यङ्गानि[6] । प्रत्यचत्यङ्गुलीः[7] । अपहतोऽपवेष्टित[8] आस्ते । न जुहोति । न यजते । न योषितं[9] चरति । अमानुषीं वाचं वदति । मृतस्य वावैष[10] तदा रूपम्भवति ॥४॥ स यस्तां देवतां वेद यां च[11] स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥५॥ अथ य एनमेतदस्माल्लोकाल्लेतंचित्यामादयति तद् तृतीयम्म्रियते ॥६॥ स यस्तां[12] देवतां वेद यां च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति[13] स उद्गाता मृत्युमतिवहतीति ॥७॥ एतावद्धैवोक्त्वा[14] रथमास्थाय प्रधावयांचकार ॥८॥ तं ह जाबालम्मत्येतं कनीयान् भ्रातोवाच[15] काम्भमाम्स्त्रूद्को[16] वाचमवादीति । हस्तिना गाथमैषीरिति ॥९॥ प्र हैवैनं तच्छशंस यः कथमवोचद्भगव इति। यस्त्रयाणाम्मृत्यूनां साम्नाऽतित्राहं वेद स उद्गाता मृत्युमतिवहतीति ॥१०॥३।९॥

द्वितीयेऽनुवाके चतुर्थः खण्डः ।

---

४ चे । ५ दि-।६-अजत्य् । ७ यज्-। ८ अव-। ९ योष्-।१० स। ११'का' अधिक है । १२ यन्तस्। १३-वीति । १४ वा । १५वहतीति' अधिक है । १६-वष् ॥

तं धाय भगवस्ते पितो[1]द्गातारममन्यतेति होवाच । तदु ह भाचीनशाला विदुर्ये[2] एषामयं इन उद्गाताऽऽस[3] । तास्मिन् ह नाऽनुविदुः ॥१॥ ते होचुरनुधावत काण्ड्वियमि[4]ति । तं हाऽनुसस्रुः[5] । तं ह काण्ड्वियमुद्गातारं चक्रिरे ब्रह्माणम्[6]प्राचीनशालिम ॥२॥ तं हाऽभ्यवेदयो[7]वाचैवमेष ब्राह्मणो मोघाय बादाय नाऽग्लायत । स नाऽस्य साम्नोऽन्विच्छती[8]ति । भाति हैवैनं तच्चक्रे ॥३॥ स यद्ध[9] वा एनमे[10]तत्पिता योन्यां रेतो भूतं सिञ्चत्यादित्यो हैनं तद्योन्यां रेतो भूतं[11] सिञ्चति । स हाऽस्य तत्र मृत्योरीशे[12] ॥४॥ अथो यदेवैनमेतत्पिता योन्यां रेतो भूतं सिञ्चति[13] तद्ध वाव स ततोऽनुसम्भवानि प्राणं च । यदा ह्येव रेतस्सिक्तं प्राण आविशत्यथ तत्सम्भवति[14] ॥५॥ अथो यदेवैनमेतद्दीक्षयन्त्यमिहैवैनं तद्योन्यां रेतो भूतं सिञ्चति । स हैवाऽस्य तत्र मृत्योरीशे[15] ॥६॥ अथो यामेवैतां वैसर्जनीयामाहुतिमध्वर्युर्जुहोति अमिव स ततोऽनुसम्भवति छन्दांसि[16] चैव ॥७॥ अथ य एनमे-

---

१-प । २ विदुर् । ३ सः । ४ कात्त्यायनम् । ५-स्र. । ६ ब्राह्मणम् । ७-पेदया । ८ न्वीच्-। ९ रखम । १० नारि ॥ ११ रद्-। १२-धौ । १३ 'अयोवाच' अधिक है । १४ 'अथो य एनमेतद्दीक्षयन्त्यं······तत्रमृत्योरीशे' अधिक है । १५ 'अथो यदेवैनमेतद्दीक्षयन्ति' अधिक है । १६ आसि ।

तदस्माल्लोकात्[१५]एनं चित्यामादधाति चन्द्रमा हैवैनं तद्योन्यां रेतो भूतं सिञ्चति । स उ हैवाऽस्य तत्र मृत्योरीशे ॥८॥ अथो यद्धैवैन-मेतदस्माल्लोकात्[१६] [१७]एतं चित्यामादधत्यथो या एवैता अवोक्षणी-या आपस्ता एव स ततोऽनुसम्भवति[१८] प्राणम्एव । प्राणो ह्यापः ॥९॥ तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यम्मृत्यु-मतिवहति वागित्यग्निं द्यामिति वायुम्भा इति चन्द्रमसम् ॥१०॥ तान्[१९] वा एतान्मृत्यून् साम्नोद्गाताऽऽत्मानं च यजमानं चाऽति-वहत्योमित्येतेनाक्षरेण प्राणेनाऽमुनाऽऽदित्येन ॥११॥

तस्यैष श्लोकः—

उतैषा ज्येष्ठ[२०] उत वा कनिष्ठ उतैषाम्पुत्र उत वा पितैषाम् ।
एको ह देवो मनसि प्रविष्टः पूर्वो ह जज्ञे स उ गर्भेऽन्तः—

इति ॥१२॥ तद्यदेशोऽभ्युक्त[२१] इममेव पुरुषं योऽयमाक्ष्णो[२२]ऽन्तरोमित्येतेनैवाक्षरेण प्राणेनैवाऽमुनैवाऽऽदित्येन[...]॥१३॥३।१०

द्वितीयेऽनुवाके पञ्चमः खण्डः । द्वितीयोऽनुवाकस्समाप्तः ॥

---

त्रिर्ह[१] वै पुरुषो म्रियते त्रिर्जायते[२] ॥१॥ स हैतदेव प्रथमम्म्रियते यद्रेतस्सिक्तं सम्भूतम्भवति[३] । स प्राणमेवाऽभिसम्भवति । आकाश-

---

१७-भ्रात् । १८-चन्तीति । १९ ता । २० जेष्ठ । २१ रभ्यु-। २१ प्यक्षाद् ॥

१ है । २ 'स हैतदेव प्रथमम्म्रियते त्रिर्जायते' अधिक है । ३सम्-।

भिजायते ॥२॥ अथैतद्द्वितीयम्म्रियते यदीक्षते । स छन्दांस्येवा-ऽभिसम्भवति । दक्षिणामभिजायते ॥३॥ अथैतत् तृतीयम्म्रियते यन्म्रियते[5] । स श्रद्धामेवाऽभिसम्भवति । लोकमभिजायते ॥४॥ तदेतत् त्र्यावृद्गायत्रं[6] गायति[7] । तस्य प्रथमयाऽऽहैतमेव[8] लोकं जयति यदु चाऽस्मिँल्लोके । तदेतेन चैनम्प्राणेन सम र्धयति[9] यमभिसम्भवत्येतां चाऽस्मा आशाम्[10] प्रयच्छति यामभिजायते ॥५॥ अथ द्वितीययाऽऽहैत-देवाऽन्तरिक्षं जयति यदु चान्तरिक्षे । तदेतैश्चैनं[11] छन्दोभिस्स-मर्धयति[1] यान्यभिसम्भवति । एतां चास्मै दक्षिणाम्प्रयच्छति याम-भिजायते ॥६॥ अथ तृतीययाऽऽहैताऽमुमेव लोकम् जयति यदु चाऽमुष्मिँल्लोके । तदेतया चैनं श्रद्धया सम र्धयति[1] यमेनैनमेतच्छ्रद्ध-याऽभ्यादधाति[12] समयामितो भविष्यतीति । एतं चास्मै लो-कम्प्रयच्छति[13] यमभिजायते ॥७॥३।१॥

तृतीयेऽनुवाके प्रथम खण्ड ।

एतद्वै तिसृभिरावृद्भिरिमाँश्च लोकाञ्जयत्येतैश्चैनम्भूतैस्सम र्धय-ति[1] यान्यभिसम्भवति ॥१॥ अथ वा अतो हिङ्कारस्यैव । तं ह[3] स्वर्गे लोके सन्तम्मृत्युरन्वैरावनायत्[4][5] ॥२॥ श्रीर्वा[6] एषा प्रजापतिस्साम्नो

४ चांव । ५-म । ६ त्रिय्-। ७-भन्ति । ८ इम-(!) । ६-मृध्-। १० 'न्यभिसम्भवति' अधिक है लाल रंग से कटा हुआ । ११ घ । १२ ऽभ्याद् । १३-भ्या ।

१ योघ्-। २-मृघ्-। ३ नास्ति । ४ सितम् । ५ अनेति । ६ श्री।

यद्धिङ्कारः । तमेतुँराना श्रिया प्रजापतिना हिङ्कारेण मृत्युमपसेध-त्ति ॥३॥ हुम्भेशाह गाऽत्र नु[8] गा यजेनयजमान इति हैतत् ॥४॥ स यथा श्रेयसा सिद्धः पापीयान् प्रतिविजत[9] एव[10] हैवाऽस्मान्मृत्युः पाप्मा प्रतिविजते ॥५॥ यन्भेयाह चन्द्रमा वै मा मासः । एष ह वै मा मासः। तस्मान्मेयाह । भा[11] इति हैतत्परोक्षेणेव। यस्माद्धेव मेसाह यद्धेव[12] मेसाहेतानि त्रीणि।तस्मान्मेति ब्रूयात् ॥६॥३।१२॥

तृतीयेऽनुवाके द्वितीयः खण्डः।

हुम्भा इति ब्रह्मवर्चसकामस्य। भातीव हि ब्रह्मवर्चसम् ॥१॥ हुम्भो इति पशुकामस्य । भो इति ह पशवो वाश्यन्ते ॥२॥ हुम्परिगीते श्रीकामस्य[2] । परिगीते ह श्रियम्पणायन्ति ॥३॥ हुम्भा भोवा इसेतदेवोपगीतम् ॥४॥ महदिनाऽभिपरिवर्तयन् गायेदिति ह स्माऽऽह नाको महाग्रामो महानिवेशो भवतीति । स यथा स्थाणुमर्पयि[3]त्वेतरेण[4] वेतरेण वा परियायात्[5] तादृक्तत् ॥५॥ तदु होवाच शाट्यायनिः कस्मै कामाय स्थाणुमर्पयेत् । अथोपगीतमेवैतत् । नैवैतदाद्रि[6]येनेति[7] ॥६॥ [इति] नु हिङ्कराणाम्[8] । अथ वा

---

७ पद् । ८ 'इति' अधिक है । ९-विच- १० प पवम् । ११ भाग । १२ पेव ॥

१ धा । २ श्रिक-,-शु । ३-था, अयित्वा । ४ रेव । ५ पर्या- ६ ऽतॅद्रू । ७ यॉद्- ८ हिङ्काक-

अथो निधनमेव । ओमिति द्वे अक्षरे । अन्तो वै साम्नो निधन-मन्तस्स्वर्गो लोकानामन्तो ब्रध्नस्य विष्टपम् ॥७॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणान्ते स्वर्गे लोके दधाति ॥८॥ य उ ह वा अपक्षो वृक्षाग्रं गच्छत्येव स ततः पतति । अथ यद्वै पक्षी वृक्षाग्रे यद्यासीताथो यत्क्षुरधारायामासीत न वै स ततोऽवपद्यते । पक्षाभ्यां हि संयत[९] आस्ते ॥९॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण स्वरपक्षं कृत्वाऽन्ते स्वर्गे लोके दधाति । स यथा पक्ष्यविभ्यदासीतैवमेव स्वर्गे लोकेऽविभ्यदास्तेऽथो[१०]ऽचरति ॥१०॥ ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च । आदित्यश्च ह वा एते अक्षरे चन्द्रमाश्च ॥११॥ आदित्य एव देवलोक-श्चन्द्रमा मनुष्यलोकः । ओमित्यादित्यो[११] वागिति चन्द्रमाः ॥१२॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यं देवलोकं गमय-ति ॥१३॥३।१३॥

तृतीयेऽनुवाके तृतीय खण्ड ।

तं हाऽऽगतम्पृच्छति कस्त्वमसीति । स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाऽऽह यस्तेऽयम्मय्यात्माऽभूदेष ते स इति[१] ॥१॥

---

९ हिमयत । १०—यो । ११—य॥

१—प्य् ।

तस्मिन् हाऽऽत्मन् प्रतिपद् । तमृत[2]रससम्पदार्यपद्गृहीतमपकर्षन्ति ।
तस्य हाऽहोरात्रे लोकमाप्नुतः ॥२॥ तस्मा उ हैतेन[3] प्रब्रुवीत[4] को-
ऽहमस्मि सुवस्त्वम् । स त्वा स्वर्ग्यं[5] स्वरगामिति ॥३॥ को ह वै
प्रजापतिरथ हैवंविदेव सुवर्गः[6] । स हि सुवर्गच्छति ॥४॥ त हा-
ऽऽह यस्त्वमसि सोऽहमस्मि योऽहमस्मि स त्वमस्येहीति ॥५॥
स एतमेव सुकृतरसम्प्रविशति । यदु ह वा अस्मिँल्लोके मनुष्या
यजन्ते[7] यत्साधु[8] कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति । तदमुं
चन्द्रमसम्मनुष्यलोकम्प्रविशति ॥६॥ तस्यैदम्[9] मानुषनिकाशन-
म[10]ण्डमुद[11]रेऽन्तस्सम्भवति । तस्यो[12]र्ध्वमन्नाद्यमुत्सीदति स्तनावभि[13] ।
स यदाजायतेऽथाऽस्मै माता स्तनमन्नाद्यम्प्रयच्छति ॥७॥ अजातो
ह वै तावत्पुरुषो यावन्न यजते[14] स यज्ञेनैव जायते । स यथाऽण्ड-
म्प्रथममनिर्भिन्नमेवमेव ॥८॥ तद्य ते ह वा एवंविदुद्गाता यज-
मानमोमित्येतेनाऽक्षरेणाऽऽदित्यं देवलोकं गमयति । धागि-
रयस्मा उत्तरेणाऽक्षरेण चन्द्र[15]मसमन्नाद्यमक्षितिम्प्रयच्छति[16] ॥९॥
अथ यस्यैतदविद्वानुद्गायति[17] न हैवैनं देवलोकं गमयति नो

---

२ त । ३ तैन । ४-ब्रह्-, -वीत् । ५-गम । ६ सुस्वर्-, -म ।
७ जायन्ते । ८ सं- । ९-दै । १०-यँ-निष्क्-इस के पश्चात् 'इदम्' । ११ अदेरे ।
१२ ध्रुव- । १३-नाच् । १४ जायते । १५-स । १६-यच्छिति । १७ ना ।

एनमन्नाद्येन समर्धयति[१८] ॥१०॥ स यथाऽण्डं विदिग्धं[१९] शयीता-
ऽन्नाद्यमलभमानमेवमेव विदिग्धश्शेतेऽन्नाद्यमलभमानः[२०] ॥११॥
तस्मादु हैवंविदमेवोद्गापयेत । एवंविद्धैवोद्गातेति हूतः
प्रतिशृणुयात्[२१] ॥१२॥३।२४॥

तृतीयेऽनुवाके चतुर्थं खण्डं । तृतीयोऽनुवाकस्समाप्तः ।

---:o:---

वागिति हेन्द्रो[१] विश्वामित्रायोक्थमुवाच[२] । तदेतद्विश्वामित्रा
उपासते वाचमेव ॥१॥ मनुर्ह वासिष्ठाय ब्रह्मत्वमुवाच । तस्मादा-
हुर्वासिष्ठमेव ब्रह्मेति ॥२॥ तदु वा आहुरेवंविदेव ब्रह्मा । क उ
एवंविदं वासिष्ठमर्हतीति ॥३॥ प्रजापतिः प्राजिजनिषत । स
तपोऽतप्यत । स ऐक्षत हन्त नु प्रतिष्ठां जनयै[३] ततो याः प्रजास्सृजेये[४]
ता[५] एतदेव प्रतिष्ठास्यन्ति नाऽप्रतिष्ठाश्चरन्तीः प्रदाघिष्यन्त इति ॥४॥
स इमं लोकमजनयदन्तरिक्षलोकममुं[६] लोकमिति । तानिमाँस्त्री-
ल्लोकाञ्जनयित्वाऽभ्यश्राम्यत् ॥५॥ तान् समतपत्[७] । तेभ्यस्तं तप्ते-
भ्यस्त्रीणि शुक्राण्युदायन्नग्निः पृथिव्या वायुरन्तरिक्षादादित्यो
दिवः ॥६॥ स[८] एतानि शुक्राणि पुनरभ्यैवाऽतपत्[९] । तेभ्यस्संतप्तेभ्य

---

१८–मृध्–। १९–ध्मा । २०–ध्मा. । २१–शुणु–॥

१ हे । २ उत्थ– । ३ जाये, जनयै । ४ स्रक्– । ५ ताम् । ६–मु ।
७ समभयन् । ८ स्म । ९–न् ।

त्रीण्येव शुक्राण्युदायन्नृग्वेद एवाग्नेर्यजुर्वेदो वायोस्सामवेद आदित्यात् ॥७॥ स एतानि शुक्राणि पुनरभ्यैवाऽतपत् । तेभ्य-स्संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्भूरित्यृग्वेदाद्भुव इति यजुर्वेदा-त्स्वरिति सामवेदात्तदेव[१०] ॥८॥ तद्ध वै त्रय्यै विद्यायै शुक्रम् । एतावदिदं सर्वम् । स यो वै त्रयीं विद्यां विदुषो लोकस्सोऽस्य लोको भवति य एवं वेद ॥९॥३॥१५॥

चतुर्थेऽनुवाके प्रथमः खण्डः ।

अयं वाव यज्ञो योऽयम्पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च ह्येष एतन्मनसा च वर्तते ॥१॥ तस्य होताऽध्वर्युरुद्गाते-त्यन्यतरां वाचा वर्तनिं संस्कुर्वन्ति ! तस्मात्ते वाचा कुर्वन्ति । ब्रह्मैव मनसाऽन्यतराम्[१] । तस्मात्स तूष्णीमास्ते ॥२॥ स यद्ध सो-ऽपि स्तूयमाने वा शस्यमाने वा वावद्यमान आसीताऽन्यतरामेवा-ऽस्यापि तर्हि स वाचा वर्तनिं संस्कुर्यात् ॥३॥ स यथा पुरुष एकपाद्यन्[२] भ्रेषन्नेति[३] रथो वैकचक्रो वर्तमान एवमेव तर्हि यज्ञो भ्रेषन्नेति[४] ॥४॥ एतद्ध तद्विद्वान् ब्राह्मण उवाच ब्रह्माणम्मातरनु-

---

१०–म ॥

१–माद् । २ य्र–न ३–न्नां । ४ त ।

वाक उपाकृते[५] वा यज्ञमानमासीनमर्[६]त्वा[७] इमे तर्हि यज्ञस्याऽन्तर-[८]
गुरिति । अर्धं हि ते तर्हि यज्ञस्यान्तरीयुः[९] ॥५॥ तस्माद्ब्रह्मा
प्रातरनुवाक उपाकृते वाचंयम आसीताऽऽपरिधानीयाया आ वषट्
कारादितरेषां स्तुतशस्त्राणामेताऽऽस्थायै[१०] पवमानानाम ॥६॥
स यथा पुरुष उभया[११] पाद्यन्[१२] श्रेयं न[१३] न्येति रथो वोभयान्तो-
वर्तमान एवमेतर्हि यज्ञो श्रेयं न न्येति ॥७॥३।१९॥

चतुर्थेऽनुवाके द्वितीयः खण्डः ।

स यदि यज्ञ ऋक्तो श्रेपाभिपाद्[१]ब्रह्मणे मव्रूतेत्याहुः । अथ यदि
यजुष्टो[२] ब्रह्मणे मव्रूतेत्याहुः । अथ यदि सामतो ब्रह्मणे मव्रूतेत्याहुः ।
अथ[३] यदनुपस्मृताद् कुत इदमजनीति ब्रह्मणे मव्रूतेत्येवाऽऽहुः[२०] ॥१॥
स ब्रह्मा प्राङ्[४] उदेत्य स्रुवेणाऽऽग्नीध्र आज्यं जुहुयाद्भूर्भुवस्स्वरित्ये-
ताभिर्व्याहृतिभिः ॥२॥ एता वै व्याहृतयस्सर्वप्रायश्चित्तयः । तद्यथा
लवणेन सुवर्णं संदध्याद्[५] सुवर्णेन रजतं रजतेन त्रपु[६] त्रपुणा
लोहायसं लोहायसेन कार्ष्णायसं[७] कार्ष्णायसेन दारु दारु च चर्म

---

५–ष्टो । ६ ' थास्–' द्विवार पढ़ा गया है । ७–त्व् । ८–गु-
रुर् । ९ ऽन्तर्युः । १०–र्थ । ११–पाद् । १२ यद् । १३ नं ॥

१ ई–। २–षो । ३ रय [illegible] मन्व. मा । ५ विदध्-। ६–पु
७ कर्–।

च श्लेष्मणै[8]वमेवैवं विद्वाँस्तत्सर्वं भिषज्यति ॥३॥ तदाहुर्यद्हौपीन्मे ग्रहान्मेऽग्रहीदित्यध्वर्यवे दक्षिणानयन्त्यशंसीन्[21]मे वषट्[9] अकर्म[10,11] इति होत्र उदगासीन्म इत्युद्गात्रेऽथ किं चकुषे ब्रह्मणे तूष्णीमासीनाय समावर्तीरेवैतरै[12]र्ऋत्विग्भिर्दक्षिणा नयन्तीति ॥४॥ स ब्रूयादर्ध-भाग्य[13] वै[14] स[15] यज्ञस्या[16]र्धं होप यज्ञस्य वहतीति । अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति । अर्धा इतरेभ्य ऋत्विग्भ्यः ॥५॥ तस्यैष श्लोको—

> मयीदमन्ये भुवनादि सर्वम्, मयि लोका मयि दिशश्चतस्रः ।
> मयी[17]दमन्ये निमिषद्यदेजति, मय्याप ओषधयश्च सर्वा, इति ॥६॥

मयीदमन्ये भुवनादि सर्वमित्येवंविदं ह वावेदं सर्वम्भुवनमन्वायत्तम् ॥७॥ मयि लोका मयि दिशश्चतस्र इत्येवंविदि ह वावलोका एवंविदि दिशश्चतस्रः ॥८॥ मयीदमन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा इत्येवंविदि[18] ह वावेदं सर्वम्भुवनम्प्रतिष्ठितम् ॥९॥ तस्माद् हैवंविदमेव ब्रह्माणं कुर्वीत । स ह वाव[19] ब्रह्मा य एवं वेद ॥१०॥३॥१७॥

चतुर्थेऽनुवाके तृतीयः खण्ड ।

---

८ दयेष्म (सदघ्यात) ग कोष्ठ लाल रंग में कटा हुआ। ९-वषु। १० अंह्णु। ११ मयु। २० 'एव' नास्ति। २१ आशांसीन्। १२-रेर्। १३-भाग्र। १४ नास्ति। १५ यै। १६ प। १७ मतिहो। १८-र्द। १९ एव।

अथ या अतस्स्तोमभागान्मेवाऽनुमन्त्राः ॥१॥ तद्धैतदेके स्तोमभा[1]गैरेवाऽनुमन्त्रयन्ते । तत्तथा न[2] कुर्यात्[3] ॥२॥ देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्येत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानाम्प्रसविता सवित्रा[4] प्रसूता इदमनु मन्त्रयामह इति वदन्तः। तदु तथा न[5] कुर्यात् ॥३॥ भूर्भुवस्स्वरित्यु हैकेऽनुमन्त्रयन्त एषा वै[6] त्रयीविद्या त्रय्यै[7] वद[8] विद्ययाऽनुमन्त्रयामह[9] इति वदन्तः । तदु तथा नो एव कुर्यात् ॥४॥ ओमित्येवानुमन्त्रयेत ॥५॥ अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्रः । तेन हैतेन वासिष्ठः प्रजातिकामोऽनुमन्त्रयां चक्रे देवेन सवित्रा प्रसूतः प्रस्तोतर्देवे[10]भ्यो वाचमिष्य भूर्भुवस्स्वरोमिति । ततो वै स बहुः[10] प्रजया पशुभिः प्राजायत[12] ॥६॥ स एव तेन वसिष्ठस्यैकस्तोम भागानुमन्त्रे[13]णाऽनुमन्त्रयेत[14] बहुरेव प्रजया[11] पशुभिः प्रजायते । इयं[15] त्वेवस्थितिरोमित्येवाऽनुमन्त्रयेत ॥७॥३।१८॥

चतुर्थेऽनुवाके चतुर्थं[16] खण्डः ।

---

१ स्तोमा- । २ नु । ३ कुर्याद् । ४ त्रे । ५ मे 'ए' खाव में कटा, ■ । ६-र्यं । ७ त्रैय्ये । ८ ऽत्र । ९-याया । १०-हु । ११-जाया । १२ प्राज्- । १३ तत्साम्- । १४-येते । १५ इय । १६ पञ्चम । १७-न्त्रा ॥

अथैष वाचा वज्रमुदृह्णाति। यदाह[1] सोमः पवत इति वोपावर्त-ध्वमिति वा वाचैव तद्वाचो वज्रं विगृह्णाते वाचस्सत्येनातिमुच्यते। तस्मादोमित्येवाऽनुमन्त्रयेत ॥१॥ देवा वा अनया[2] त्रय्या [ विद्यया ] सरसयोर्ध्वास्स्वर्गं लोकमुदक्रामन्। ते मनुष्या-णामन्वागमाद्बिभ्यतस्त्रयं[3] वेदमपीलयन् ॥२॥ तस्य पीलयन्त एकमेवाक्षरं नाऽशक्नुवन्पीलयितुमोमिति यदेतत् ॥३॥ एष उ ह वाव सरसः। सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥४॥ स यां ह वै त्रय्या[4] विद्यया सरसया जितिं जयति यामृद्धिमृध्नोति जयति तां जितिमृध्नोति तामृद्धिं य एवं वेद ॥५॥ एतद्ध वा अक्षरं त्रय्यै विद्यायै प्रतिष्ठा[5]। ओमिति वै होता प्रतिष्ठित ओमित्य-ध्वर्युरोमित्युद्गाता ॥६॥ एतद्ध वा अक्षरं वेदानां त्रिविष्टपम्। एतस्मिन्वा अक्षरे[6] ऋत्विजो यजमानमाधाय स्वर्गे लोके समुदूहन्ति तस्मादोमित्येवानुमन्त्रयेत ॥७।३।१.६॥

चतुर्थेऽनुवाके पञ्चमः खण्डः। चतुर्थोऽनुवाकस्समाप्तः।

---

गुहासि देवोऽस्युपवा[1]स्युप[2] तं वायस्व[3] योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥१॥ माहिनासि[4] बहुलासि बृहत्यासि रोहिण्यस्यपभासि ॥२॥

१ य। २-र्थे। ३ विमृ-। ४ त्रेय्-। ५ प्रतिष्ठैं। ६-र।
१ देवास्मि। २ -प्। ३ वयस्वि। ४ महिका।

सम्भूर्देवोऽसि समहम्भूयासम्[5] । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥३॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥४॥ नाम मे शरीरम्मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे मोऽपह्वथा इतीमाम्पृथिवीमब्रोचत् ॥५॥ तमियमागतम्पृथिवी प्रतिनन्दत्ययं ते भगवो लोकः । स ह[6] नावय लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥७॥ किं नु ते मयीति । नाम[7] मे शरीरम्मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे पुनर्देहीति । तदस्मा[14] इयम्पृथिवी पुनर्ददाति ॥८॥ तामाह प्र मा वहेति । किमभीति । अग्निमिति तमग्निमभिप्रवहति[8] ॥९॥ सोऽग्निमाहाऽभिजिदस्यभि[10]जय्यासम्[11] । लोकजिदसि लोकं जय्यासम् । अत्तिरस्यन्नमद्यासम् । अन्नादो भवति यस्त्वैवं वेद ॥१०॥ सम्भूर्देवोऽसि समहम्भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥११॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥१२॥ तपो मे तेजो मेऽन्नम्मे वाक् मे । तन्मे त्वयि । तन्मे मोऽपह्वथा[12] इत्यग्निमब्रोचत् ॥१३॥ त तयेत्राऽऽगत-

---

५ आभूतिरित् । ६ स । ७ मवी । ८ प्र । ९-हन्ति । १० 'अभिजिदस्य' दो बार आया है । ११ जय्यं- । १२-ह्वाय् । १३ तस्मा । १४ अस्मैाय् ॥

अग्निः प्रतिनन्दत्ययं ते भगवो लोकस्सह नावयं लोक इति ॥१४॥ यद्वाव मे त्वयीत्याहु तद्वाव मे पुनर्देहीति ॥१५॥ किं नु ते मयीति । तपो मे तेजो मेऽन्नम्मे वाङ् मे । तन्मे त्वयि । तन्मे पुनर्देहीति । [तद्] अस्मा[१२] अग्निर्पुनर्ददाति ॥१६॥ तमाह प्र मा वहेति ॥१७॥३॥२०॥

पञ्चमेऽनुवाके प्रथम खण्डः ।

किमभीति । वायुमिति । तं वायुमभिप्रवहति ॥१॥ स वायुमाह *यत्पुरस्ताद्वासीन्द्रो राजा भूतो वासि । यद्दक्षिणतो वासीशानो* भूतो वासि । यत्पश्चाद्वासि वरुणो राजा भूतो वासि । यदुत्तरतो वासि सोमो राजा भूतो वासि । यदुपरिष्टादववासि प्रजापतिर्भूतो-ऽववासि[१] ॥२॥ प्राणो[२]ऽस्येकऋषिरनवद्यो[३] देवानाम्बिलमप्ययः[४] ॥३॥ तव प्रजास्त्वौषधयस्त्वापो विचलितमनुविचलन्ति ॥४॥ सम्भूर्देवो[५]ऽसि समहम्भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥५॥ यास्ते प्रजा उपदिष्टनाऽहं तव ताः पर्येमि । उप ते ता दिशामि ॥६॥ प्राणापानौ[६] मे श्रुतम्मे । तन्मे त्वयि । तन्मे मोऽप्रदृथा इति वायुमवोचत् ॥७॥ तं तथैवागतं वायुः प्रतिनन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥८॥ यद्वाव मे त्वयी[७]-

१३प-।२इ-।३-ऋषो।४(अ)पचि।५सँभूर्।६प्राणानौ।७त्वयी॥

स्याह तद्वाव मे पुनर्देहीति ॥६॥ किं नु ते मयीति । प्राणापानौ मे श्रुतस्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै वायुः पुनर्ददाति ॥१०॥ तमाह प्र मा वहेति । किमभीति । अन्तरिक्षलोकमिति । तमन्तरिक्षलोकमभिवहति ॥११॥ तं तथैवाऽऽगतमन्तरिक्ष लोकः प्रति नन्दयते ते भगवो लोकः । स ह नायं लोक इति ॥१२॥ यद्वाव मे त्वयीस्याह तद्वाव मे पुनर्देहीति ॥१३॥ किं नु ते मयीति । अयम्म आकाशः स मे त्वयि । तन्मे पुनर्देहीति । तमस्मा आकाशमन्तरिक्ष लोकः पुनर्ददाति ॥१४॥ तमाह प्र मा वहेति ॥१५॥३॥२१॥

पञ्चमेऽनुवाके द्वितीयः खण्डः ।

किमभीति । दिश इति । तं दिशोऽभिवहति ॥१॥ तं तथैवागतं दिशः प्रतिनन्दयन्ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति । श्रोत्रमिति । तदस्मै श्रोत्रं दिशः पुनर्ददति ॥४॥ ता आह प्र मा वहतेति । किमभीति । अहोरात्रयोर्लोकमिति । तमहोरात्रयोर्लोकमभिवहन्ति ॥५॥ तं तथैवागतमहोरात्रे प्रतिनन्दतोऽयं ते भगवो लोकः । स ह नोऽयं लोक इति ॥६॥ यद्वाव

१-न्द । २-द्वमि ॥

मे युवयोरिसाह तद्वाव मे पुनर्दत्तमिति ॥७॥ किं नु त आवयोरिति । अदितिरिति । तामस्मा अदितिमहोरात्रे पुनर्दत्तः ॥८॥ ते आह प्र मा वहतमिति ॥९॥३॥२२॥

पञ्चमेऽनुवाके तृतीयः खण्डः ।

किमभीति । अर्धमासानिति । तमर्धमासानभिप्रवहतः ॥१॥ तं तथैवागतमर्धमासाः प्रतिनन्दन्त्सयं[2] ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्विसाह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति । इमानि क्षुद्राणि पर्वाणि । तानि मे युष्मासु । तानि मे प्रति संधत्तेति । तान्यस्यार्धमासाः पुनः प्रति संदधाति[3] ॥४॥ तानाह प्र मा वहतेति । किमभीति । मासानिति । तन्मासानभिप्रवहन्ति ॥५॥ तं तथैवागतन्मासाः प्रतिनन्दन्त्सयं[2] ते भगवो लोकः । स ह नोऽयं लोक इति ॥६॥ यद्वाव मे युष्मास्विसाह तद्वाव मे पुनर्दत्तेति ॥७॥ किं नु तेऽस्मास्विति । इमानि स्थूलानि पर्वाणि । तानि मे युष्मासु । तानि मे प्रति संधत्तेति । तान्यस्य मासाः पुनः प्रति संदधाति ॥८॥ तानाह प्र मा वहतेति ॥९॥४॥२३॥

पञ्चमेऽनुवाके चतुर्थः खण्डः ।

---

१ बाति । २-यति । ३-धाति, बाद रंग से शोधा हुआ है।

किमभीति । ऋतूनिति । तमृतूनभिप्रवहन्ति ॥१॥ तं तथैवाऽऽगतमृतवः प्रतिनन्दन्त्ययं ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति । इमानि ज्यायांसि पर्वाणि । तानि मे युष्मासु तानि मे प्रतिसंधत्तेति । तान्यस्यर्तवः पुनः प्रतिसंदधति ॥४॥ तानाह ॥ मा वहतेति । किमभीति । संवत्सरमिति । तं संवत्सरमभिप्रवहन्ति ॥५॥ तं तथैवाऽऽगतं संवत्सरः प्रतिनन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥७॥ किं नु ते मयीति । अयमम्म आत्मा । स मे त्वयि तन्मे पुनर्देहीति । तमस्या आत्मानं संवत्सरः पुनर्ददाति ॥८॥ तमाह प्र मा वहेति ॥९॥३।२४॥

पञ्चमेऽनुवाके पञ्चमः खण्डः ।

किमभीति । दिव्यान् गन्धर्वानिति तं दिव्यान् गन्धर्वानभिप्रवहति ॥१॥ त तथैवाऽऽगतं दिव्या गन्धर्वाः प्रतिनन्दन्त्ययं ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति ।

---

१ तैः। २ त्वयी। ३ यद्ध्वे॥

१ तं।

गन्धो[२] मे मोदो मे प्रमोदो मे। तन्मे युष्मासु। तन्मे पुनर्ददेति तदस्मै दिव्या गन्धर्वाः पुनर्ददति ॥४॥ तानाह प्र मा वहतेति। किमभीति। अप्सरस इति। तमप्सरसोऽभिप्रवहन्ति ॥५॥ तं तथैवाऽऽगतमप्सरसः प्रतिनन्दन्त्ययं ते भगवो लोकः। स ह नोऽयं लोक इति ॥६॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे[३] पुनर्ददेति ॥७॥ किं नु तेऽस्मास्विति। हसो मे क्रीळा मे मिथुनम्मे। तन्मे युष्मासु। तन्मे पुनर्ददेति। तदस्मा अप्सरसः पुनर्ददति ॥८॥ ता आह प्र मा वहतेति ॥९॥१२५॥

पञ्चमेऽनुवाके षष्ठः खण्डः।

किमभीति। दिवमिति। तं दिवमभिप्रवहन्ति ॥१॥ तं तथैवाऽऽगतं द्यौः[१] प्रतिनन्दत्ययं ते भगवो लोकः। स ह नोऽयं लोक इति ॥२॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥३॥ किं नु ते मयीति। तृप्तिरिति। सकृत्तस्येव छेपा।--तामस्मै तृप्तिं द्यौः पुनर्ददाति ॥४॥ तमाह प्र मा वहेति। किमभीति। देवानिति। तं देवानभिप्रवहति ॥५॥ तं तथैवाऽऽगतं देवाः प्रतिनन्दन्त्ययं ते भगवो लोकः। स ह नोऽयं लोक इति ॥६॥ यद्वाव मे युष्मास्वि-

२ गन्धर्वो। ३ युयद्॥
१ द्यौ।

साह तद्वाव मे पुनर्देहीति ॥७॥ किं नु तेऽस्मास्विति । अमृतमिति । तदस्मा अमृतं[2] देवाः पुनर्ददाति ॥८॥ तानाह प्र मा वहतेति॥९॥३।२९॥

पञ्चमेऽनुवाके सप्तमः खण्डः ।

किममीति । आदित्यमिति । तमादित्यमभिप्रवहन्ति ॥१॥ स आदित्यमाह विभूः पुरस्तात्सम्पत्[1] पश्चात् । सम्यङ्[2] त्वमसि । समीचो मनुष्यानरोची[3] रुपतस्त्वं ऋषिः पाप्मानं हन्ति । अपहतपाप्मा भवति[4] यस्त्वे[5]वं वेद ॥२॥ सम्भूतिर्वो[6]ऽसि समहम्भूयासम् । आभूतिरस्याभूयासम् । भूतिर[7]सि भूयासम् ॥३॥ यास्ते प्रमा उपदिष्टा नाहं तत्र ताः पर्येमि । उप ते ता दिशामि ॥४॥ ओजो मे बलम्मे चक्षुर्मे । तन्मे त्वयि तन्मे योऽपहृत्या इत्यादित्यमरोचत ॥५॥ तं तथैवाऽऽ[8]गतमादित्यः प्रतिनन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥७॥ किं नु ते मयीति । ओजो मे[9] बलम्मे चक्षुर्मे । तन्मे त्वयि[10] । तन्मे पुनर्देहीति । तदस्मा आदित्यः पुनर्ददाते ॥८॥ तमाह प्र मा वहेति । किममीति । चन्द्रमसमिति[11] । तं चन्द्रमसमभि-

---

२–दाति ॥

१–यात्। २ सम्यँङ् । ३ मरोचिपि 'ति' बाद में कटा हुआ है, । ४ त्व् । ५ एवम् । ६–भूतिर् । ७ भूतिर् । ८ ऽगतम् । ९ मास्मि । १० त्वीयी. त्वी यीति । ११ चंद्र–

प्रवहति ॥९॥ स चन्द्रमसमाह सत्यस्य पन्था न त्वा[12] जहाति[13]।
अमृतस्य[14] पन्था न त्वा जहाति ॥१०॥ नवो नवो भवसि जाय-
मानो भरो नाम ब्राह्मण उपास्से। तस्याचे सखा उभये देवमनुष्या
अन्नाद्यमभरन्ति । अन्नादो भवति यस्त्वैवं[15] वेद ॥११॥ सम्भूर्देवो-
ऽसि समहम्भूयासम् । आभूतिस्त्वाभूयासम् । भूतिरसि
भूयासम् ॥१२॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि।
उप ते ता दिशामि ॥१३॥ मनो मे रेतो मे प्रजा मे पुनस्सम्भू-
तिर्मे[15,16] तन्मे त्वयि तन्मे सोऽपहृया इति चन्द्रमसमवोचत् ॥१४॥ तं
तथैवाऽऽगतं चन्द्रमाः प्रतिनन्दत्ययं ते भगवो लोकः। सह नावयं
लोक इति॥१५॥यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति॥१६॥
किं नु ते मयीति । मनो[17] मे रेतो मे प्रजा मे पुनस्सम्भूतिर्मे[16]।तन्मे
त्वयि । तन्मे पुनर्देहीति । तदस्मै चन्द्रमाः पुनर्ददाति ॥१७॥
तमाह प्र मा वहेति ॥१८॥३।२७॥

पञ्चमेऽनुवाके ऽष्टमः खण्डः।

किमभीति । ब्रह्मणो[1] लोकमिति । तमादित्यमभिप्रवहति ॥१॥
स आदित्यमाह प्र मा वहेति । किमभीति । ब्रह्मणो[2] लोकमिति ।

---

११ चँन्द्र-। १२ या। १३-त्मास। १४ नास्ति, अमृतस्य पयथा ..........देवोऽसि समहम्। १५-ति। १६ मे, म। १७ किं नु॥
१ प्रथमो। २ माह-।

तं चन्द्रमसमभिप्रवहति[3] । स एतमेव देवेन अनुसंचरति[4] ॥२॥
एषोऽन्तोऽतः परः प्रवाहो नास्ति[5] । यानु काँश्चाऽतः प्राचो लोका-
नभ्यवादिष्म[6] ते[7] सर्व आप्ता भवन्ति ते जितास्तेष्वस्य सर्वेषु काम-
चारो भवति य एवं वेद ॥३॥ स यदि कामयेत पुनरिहाऽऽजाये-
येति यस्मिन् कुलेऽभिध्यायेद्यदि ब्राह्मणकुले यदि राजकुले
तस्मिन्नाजायते । स एतमेव लोकम्पुनः प्रजानन्नभ्यारोहन्नेति ॥४॥
तद्ध होवाच शाट्यायनिर्बहुव्याहितो वा अयम्बहुशो लोकः । एतस्य
वै कामाय नु[8] ब्रुवते[9] [वा] श्राम्यन्ति[10] वा क एतस्मा अस्य पुनरिहेया-
दिहैव स्यादिति ॥५॥१।२८॥

पञ्चमेऽनुवाके नवमः खण्डः । पञ्चमोऽनुवाकस्समाप्तः ।

---

उच्चैःश्रवा[1] ह कौपयेयः[2] कौरव्यो राजाऽऽस । तस्य ह केशी[3]
दार्भ्यः पाञ्चालो राजा स्वस्रीय[4] आस । तौ[5] हाऽन्योन्यस्य प्रिया-
वासतुः ॥१॥ स होच्चैःश्रवाः[1] कौपयेयोऽस्माल्लोकात् प्रेयाय ।
तस्मिन् ह प्रेते केशी[3] दार्भ्योऽरण्ये मृगयां चचाराऽभिगं रिनिनी-

---

३–यन्ति, । ४ 'एवास्यमभिप्रवहति । ∽ मा यहेऽस्ति । किमर्थोऽस्ति । प्रज्ञया लोकमिति ... देवते अनु संचरति' अधिक है । ५ ऽस्मि । ६–दिष्ठ । ७ हेषु । ८ 'वा' अधिक है । ९ ब्रुवते । १० 'चा' अधिक है ।

१–प्रेथ्–। २ कौय–। ३ केरशी, केश्य । ४ स्वस्रो–। ५ 'गा' लाल रङ्ग में कटा हुआ अधिक है ।

पमग्गः ॥२॥ स ह तथैव पल्ययमानो मृगान् प्रसरन्[6] तेरेभे-
थोन्नैश्वत्रसं[7] कौपेयपनधिजगाम ॥३॥ तं होवाच दृप्यामि स्त्री३-
ज्जानामीति । न दृप्यसीति होवाच जानासि । स[8] एवास्मि यस्मा
मन्यस इति ॥४॥ अथ यद्भगव आहुरिति होवाच य आविर्भव-
न्त्यन्येऽस्य लोकमुपयन्तीत्यथ कथमशको म आविर्भवितुमिति ॥५॥
ओमिति होवाच यद्रा वै तस्य लोकस्य गोप्तारमविदेऽवस्त आवि-
रभूवममिमं[10] चास्य विनेष्याम्यनु चैनं शासिष्यामीति ॥६॥ तथा
भगव इति होवाच[11] । तं वै नुत्वा परिष्वजा इति । तं ह स्म
परिष्वजमानो यथा धूमं वापीयाद्वायुं वाकाशं[12] वाग्न्यर्चि वाऽपोवैनं
ह स्मैनं व्येति । न ह स्मेनम्परिष्वङ्गायोपलभते ॥७॥१।२६॥

षष्ठेऽनुवाके प्रथम खण्डः ।

स होवाच[1] यद्वै ते पुरा रूपमासीत्तत्ते रूपम । न[2] तु त्वा परि-
ष्वङ्गायोपलभे[3][4] इति ॥१॥ ओमिति होवाच ब्राह्मणो वै मे साम
विद्वान् साम्नोद्गायन् । स मेऽशरीरेण साम्ना शरीराण्यधूनोत्[5] ।
यथस्य वै किल साम विद्वान् साम्नोद्गायति देवतानामेव मनोक्ता
गमयतीति ॥२॥ एतद्धः प्राजापत्य इति होवाच प्रजापतेः प्रियः

6 प्रस्सर्–। 7 ऽन्नैश्व–,ऽन्नैश्व–। 8 य । 9 भत । 10 वा।
11 हे । 12 धॅ ॥

1 ऽत्र । 2 ने । 3–गोयो । 4 ऽर लभते । 5–ण्यरयन् ।

पुत्र आस । स तस्मा एतत् सामाब्रवीत् । तेन स ऋषीणामुद्गायत् । त एत ऋषयो धूतशरीरा इति ॥३॥ एतेनो एव साम्नेति होवाच प्रजापतिर्देवानामुदगायत् । त एत उपरि देवा धूतशरीरा इति ।४॥ तस्मिन् हैनमनुशशास । तं हानुशिष्योवाच यस्स्मैवैतत् साम विद्यात् स स्मैव त उद्गायत्विति ॥५॥ स हानुशिष्ट आजगाम । स ह स्म कुरुपञ्चालानाम्ब्राह्मणाननुपृच्छमानश्चरति ॥६॥३।१०॥

पष्ठेऽनुवाके द्वितीयः खण्डः ।

व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यो वस्तत्साम वेद यदहं वेद स एव म उद्गास्यति । मीमांसध्वमिति ॥१॥ तस्मै ह मीमांसमानानामेकश्चन [ न ] सम्प्रत्यभिदधाति ॥२॥ स ह तथैव यक्ष्यमाणश्श्मशाने वा वने वाऽऽहृतीशयानमुपाधावयांचकार । तं ह याच्यमानः प्रजहौ ॥३॥ तं होवाच कोऽसीति । ब्राह्मणोऽस्मि मानृदो माह्व इति ॥४॥ स किं वेत्थेति । सामेति ॥५॥ ओमिति होवाच । व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यदि तत्साम वेत्थ यदहं वेद त्व-

---

६ भा । ७ तं । ८ वे । ९-षा । १०-पाञ्चे-।

१-यम-। २ यदि । ३ त्वम । ४ वेत्थ । ५ दमश्शूनाम । ६ याव,साध । ७ न । ८ वृष,वप । ९ च्छाय:न,जायान । १०-यम-। १२ 'यदह वेत्थ' अधिक: है ।

मेव म उद्गास्यसि[12] । मीमांसस्वेति ॥८॥ तस्य ह मीमांसमानस्त-देव[13] सम्प्रत्यभिदधौ ॥७॥ तं होवाचाऽयम्म उद्गास्यतीति[14] ॥८॥ तस्यै ह कुरुपञ्चालानाम्[15] ब्राह्मणा असूयन्त[16] आहुरेषु ह वा अयं कुल्येषु[17] सत्सूद्गास्यति[18] । कस्मा अयमलमिति[19] ॥ ९ ॥ अलम्[20] न्वै मह्यमिति हस्माऽह । सैवाऽलम्मस्याऽलम् मतामिद्गतस्य हाऽल-मवोऽजगौ[21,22] । तस्मादाऽलम्यैलाजोद्गातेत्याख्यापयन्ति ॥१०॥३॥२१॥

पष्टेऽनुवाके तृतीय खण्ड. ।

तद्ध सात्यकीर्ता आहुर्यां वयं देवतामुपास्मह एकमेव वयं तस्यै देवतायै रूपं गव्यादिशाम एकं वाहन एकं हस्तिन्येकम्पुरुष एकं सर्वेषु भूतेषु । तस्या एवेदं देवतायै सर्वं रूपमिति ॥१॥ तदेतदेकमेव रूपम्प्राण एव । यावद्ध्येव प्राणेन प्राणिति तावद्रूपम्भवति तद्रू[1]-पम्भवति ॥२॥ तदथ यदा प्राण उत्क्रामति दार्वि[2]वेव[3] भूतोऽनर्थ्यः[4] परिशिष्यते न किंचन रूपम् ॥३॥ तस्यान्तरात्मा तपः । तस्मा-त्तप्यमानस्योष्णतरः प्राणो भवति ॥४॥ तपसोऽन्तरात्माग्निः । स निरुक्तः । तस्मात्स दहति[5] ॥५॥ अथाधिदैवतम्[6] । इयमेवैषा

१२–ति से ठीक किया हुआ १३ 'त' अधिक है। १४ नास्ति 'इति'। १५–पाञ्च–। १६ ग्रासू– १७ कुलेषु। १८ ऽगास–। १९ यर्णाम। २० न्वै इसके आगे 'म' लाल रंग में कटा हुआ है। २१ 'म' अधिक है। २२ एयौ ॥

१ पद्रू। २ पूयो। ३–प। ४–थः। ५ दति। ६–दैव–। ७–ए–।

देवता योऽयम्पवते । तस्मि ेतस्मिन्नापोऽन्तः । तद्भ्रम । सो-
ऽरूद्व उपासितव्यः । यदस्मिन्नापोऽन्तस्तेनाऽरूद्वः ॥६॥ तस्या-
न्तरात्मा तपस् । तस्मादेष आतपत्युष्णतरः पवते ॥७॥ तपसो-
ऽन्तरात्मा विद्युत् । सा निरक्तः । तस्मात्सोऽपि दहति ॥८॥ तानि
वा एतानि चत्वारि साम प्राणो वाङ्मनस्स्वरः । स एष प्राणो
वाचा करोति मनो नेत्रः । तस्य स्वर एव प्रजाः । प्रजावान्
भवति य एवं वेद ॥९॥३॥३२॥

षष्ठेऽनुवाके चतुर्थः खण्डः ।

स यो वायुः प्राण एव सः । योऽग्निर्वागेव सा । यश्चन्द्रमा
मन एव तद् । य[1] आदित्यस्स्वर एव सः । तस्मादेतमादित्यमाहु-
स्स्वर एतीति ॥१॥ स यो ह वा अमूर्देवता उपास्ते या अमूराधि-
दैवतं दूरूपा[2] वा एता दुरनुसम्प्राप्या[3] इव । कस्तद्वेद यथैता अनु
वा सम्प्राप्नुयाद्वा ॥२॥ अथ य एता अध्यात्ममुपास्ते स हा-
ऽन्तिदेवो भवति । निर्यन्तीव[4] वा इत एता । [त] अस्य वा
एतास्सशरीरस्य सह प्राणेन निर्यन्ति । क उ एव तद्वेद यथैता
अनु वा सम्प्राप्नुयान्न[5] वा ॥३॥ अथ य एता उभयीरेकधा[6] भव-

'तानि वासितव्या (?) यदस्मिन्नापोऽन्तम्—तस्मात्सोऽपि दहति' इत्यादि पाया है ॥

१ यत् । २—रूपे । ३—प्राप्या । ४ वा । ५ वा । ६ उभेधीर् ।

न्तीवेद स एवानुष्टया साम वेद स आ[illegible] ॥५॥ तदाहुः नादेशमात्राद्वा इत एना र[illegible] योनि । [illegible] स्स्वर्य उपर्युपरि वर्तत इति ॥३॥ अथ ह[illegible] एता एकम्भवन्तीति । अतो [illegible]स्स्वर्य उपर्युपरि वर्तत इति ॥६॥ स एष ब्राह्मण आवर्त । स य एवमेतम्ब्रह्मण आवर्तं वेदाऽभ्येनम्प्रजाः पशव आवर्तन्ते सर्वमायुरेति ॥७॥ स यो हैवं विद्वान्प्राणेन प्राणयाऽपानेनाऽपान्य मनसेता उभयोर्दधता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्तम्भवति सर्वं जितम्। न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥८॥१३॥

षष्ठेऽनुवाके पञ्चम खण्ड ।

तदेतन्मिथुन यद्वाक्च प्राणश्च । मिथुनमृक्सामे । आचतुर वाव मिथुनम्प्रजननम् ॥१॥ तद्यत्राऽऽह आह सोमः पवत इति वोपावर्तध्वमिति वा तत्सहैव वाचा मनसा प्राणेन स्वरेण हिङ्कुर्वन्ति । तद् हिङ्कारेण मिथुन क्रियते ॥२॥ सहैव वाचा मनसा प्राणेन स्वरेण निधनमुपयन्ति । तन्निधनेन मिथुन क्रियते ॥३॥ तत्सप्तविधं साम्नः । सप्तकृत्व उद्गाताऽऽत्मान च यजमान च शरीरात्प्रजनयति ॥४॥ यादृशस्यो ह वै रेतो भवति तादृश

७–म । ८ स्वय् । ९–रि (?) । १०–ॅ इह् । ११ ब्रह्मन ॥
१ पाप । २–कार । ३–श्रा ।

सम्भवति यदि वै पुरुषस्य पुरुष एव यदि गोर्गौरेव यद्यश्वस्याश्व एव यदि मृगस्य मृगएव। यस्येव रेतो भवति तदेव सम्भवति ॥५॥ तद्यथा ह वै सुवर्णं हिरण्यमग्नौ प्रास्यमानं कल्याणतरं कल्याणतरम्भवति एवमेव कल्याणतरेण कल्याणतरेणात्मना सम्भवति य एवं वेद ॥६॥ तदेतदृचाभ्यनूच्यते ॥७॥३॥१४॥

पञ्चेऽनुवाके षष्ठ खण्ड ।

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः। समुद्रे अन्तः कवयो विचक्षते मरीचीनाम्पदमिच्छन्ति वेधस इति ॥१॥ पतङ्गमक्तमिति। प्राणो वै पतङ्गः। पतन्निव ह्येष्वङ्गेष्वेति स्वमुदीक्षते। पतङ्ग इत्याचक्षते ॥२॥ असुरस्य माययेति। मनो वा असुरम्। तद्ध्यसुषु रमते। तस्यैष माययाक्तः ॥३॥ हृदा पश्यन्ति मनसा विपश्चित इति। हृदैव ह्येते पश्यन्ति यन्मनसा विपश्चितः ॥४॥ समुद्रे अन्तः कवयो विचक्षत इति। पुरुषो वै समुद्र एवंविद उ कवयः। त इमाम्पुरुषेऽन्तर्वाचं विचक्षते ॥५॥ मरीचीनाम्पदमिच्छन्ति वेधस इति। मरीच्य इव वा एता देवता यदग्निर्वायुरादित्यश्चन्द्रमाः ॥६॥ न ह

४ ऋच्या। ५-स्या-॥

१ प्रथम। २-ना। ३-ए। ४ म। ५ ह्ट्। ६ पूर्व। ७ स।

वा एतासां देवतानाम्पद्मानि । पद्नो ह वै पुनर्मृत्युरन्वेति ॥७॥ तदेवदनन्वितं साम पुनर्मृत्युना । अति पुनर्मृत्युं तरति य एवं वेद ॥८॥३।३५॥

षष्ठेऽनुवाके सप्तमः खण्डः ।

पतङ्गो वाचम्मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः। तां द्योतमानां स्वर्यम्मनीषामृतस्य पदे कवयो निपान्ति

इति ॥१॥ पतङ्गो वाचम्मनसा बिभर्तीति । प्राणो वै पतङ्गः । स इमां वाचम्मनसा बिभर्ति ॥२॥ तां गन्धर्वोऽवदद्गर्भे अन्तरिति । प्राणो वै गन्धर्वः पुरुष व गर्भः । स इमाम्पुरुषेऽन्तर्वाचं वदति ॥३॥ तां द्योतमानां स्वर्यम्मनीषामिति । स्वर्या ह्येषा मनीषा यद्वाक् ॥४॥ ऋतस्य पदे कवयो निपान्तीति । मनो वा ऋतमेवंविद उ कवयः । ओमित्येतदेवाचरमृतम् । तेन यद्वम्मीमांसन्ते यद्यजुर्यत्साम तदेनां निपान्ति ॥५॥३।३६॥

षष्ठेऽनुवाकेऽष्टमः खण्डः ॥

---

८ ये ।

१-ओ । २-ऋा । ३ वदति । ४ ऋन्त-। ५-ऋा । ६ 'यत्साम' के आगे 'ओमित्ये-ऋतम्' है ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स स[1]ध्रीचीस्स विषूचीर्वसान आ वरीवर्त्ति भुवनेष्वन्तर् इति ॥१॥

अपश्यं गोपामनिपद्यमानामिति । प्राणो वै गोपाः । स हीदं सर्वम-निपद्यमानो गोपायति ॥२॥ आ च परा च पथिभिश्चरन्तमिति । तद्ये च ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च परा च पथिभिश्चरति ॥३॥ स सध्रीचीस्स विषूचीर्वसान इति । सध्रीचीश्च ह्येष एतद्विषूचीश्च प्रजा व[2]स्ते ॥४॥ आ वरीवर्त्ति भुवने-ष्वन्तरिति । एष ह्येवैषु भुवनेष्वन्तरावरीवर्त्ति ॥५॥ स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄ[3]णां च विज्ञायते । इत ए[4]वोर्ध्वस्स्वरुदेति । स उपरि मूर्ध्नो ललायति ॥६॥ स वि[5]द्यादागमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशे[6]क्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्य[7]ते ॥७॥ तदे[8]तद-भ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव [न] कंचन भ्रातृव्य-म्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥८॥३॥३७॥

षष्ठेऽनुवाके नवम खण्ड । षष्ठोऽनुवाकस्समाप्त ॥

---

१–ध्रीच्–इस पाद के प्रारम्भ में 'अति' ऐसा अधिक है। २ सस्ते। ३–तॄणा–। ४–ध्व। ५ आगाद्। ६ परिशे–। ७ पत। ८ स्र–॥

प्रजापतिम्ब्रह्मा ऽसृजत । तमपश्यममुखमसृजत ॥१॥ तमम-पश्यमुखं शयानम्ब्रह्मा ऽऽविशत् । पुरुष्यं तत् । प्राणो वै ब्रह्म । प्राणो वावैनं तदाविशत् ॥२॥ स उदतिष्ठत् प्रजानां जनयिता । तं रक्षांस्यन्वसचन्त ॥३॥ तमेतदेव साम गायन्नत्रायत । यद्गायन्नत्रायत तद्गायत्रस्य गायत्रत्वम् ॥४॥ त्रायत एनं सर्वस्मात्पाप्मनो मुच्यते य एवं वेद ॥५॥ तमुपाऽस्मै गायता नर इत्यृचाऽऽश्रवणीयेनोपागायन् ॥६॥ यदुपाऽस्मै गायता नर इति तेन गायत्रमभवत् । तस्मादेषैव प्रतिपत्कार्या ॥७॥ पवमानायेन्दावा अभि देवमिया-हुम्-भात्ताता इति षोडशाक्षराण्यभ्यगायन्त । षोडशकलं वै ब्रह्म । कलाश एवैनं तद्ब्रह्माऽऽविशत् ॥८॥ तदेतच्चतुर्विंशत्यक्षरं गायत्रम् । अष्टाक्षरः प्रस्तावः । षोडशाक्षरं गीतं तच्चतुर्विंशतिस्सम्पद्यन्ते । चतुर्विंशत्यर्धमासस्संवत्सरः । संवत्सरस्साम ॥९॥ ता ऋचश्शरीरेण मृत्युरन्वैतत् । तथच्छरीरवचन्मृत्योराप्तम् । अथ यदशरीरं तदमृतम् । तस्याऽशरीरेण साम्ना शरीराण्यधूनोत् ॥१०॥ ३।३८॥

सप्तमेऽनुवाके प्रथमः खण्डः ।

---

१ मुख्-। २ अप्रव्-। ३-ष । ४-मास्य् । ५ अनुसच्-। ६ गायत्रेन । ७ श्रवसीय्-। ८ ऽपेगा-। १०-त्राम । ११ प्रास्त्-। १२ तम् । १३-यत । १४-सास् ॥

ओवा३चोवा३चोवा३च् हुम्मा ओवा इति षोडशाक्षरा-ण्यभ्यगायत । षोडशकलो[2] वै पुरुषः । कलाशः एवास्य तच्छरीराण्यधूनोत् ॥२॥ स एषोऽपहतपाप्मा धूतशरीरः । तदेविक्रयाचतेयुदासंगायशो इत्युदास । आ इति आदधात् । वागिति तद्ब्रह्म । तदिदन्तरिक्षं सोऽयं वायुः पवते । हुमिति चन्द्रमाः । भा इत्यादित्यः ॥२॥ एतस्य ह वा इदमक्षरस्य क्रतोर्भातीसाचक्षते ॥३॥ एतस्य ह वा इदमक्षरस्य क्रतोरभ्रमिसाचक्षते ॥४॥ एतस्य ह वा इदमक्षरस्य क्रतोः कुभ्रमिसाचक्षते ॥५॥ एतस्य ह वा इदमक्षरस्य क्रतोरनुभ्रमिसाचक्षते ॥६॥ एतस्य ह वा इदमक्षरस्य क्रतोर्दपम इत्याचक्षते ॥७॥ एतस्य ह वा इदमक्षरस्य क्रतोर्दर्भ इत्याचक्षते ॥८॥ एतस्य ह वा इदमक्षरस्य क्रतोर्यो भातीत्याचक्षते ॥९॥ एतस्य ह वा इदमक्षरस्य क्रतोस्सम्भवतीत्याचक्षते ॥१०॥ तयत्किं च भा३ इति च भा३ इति च तदेतन्मिथुनं गायत्रम् । प्र मिथुनेन जायते य एवं वेद ॥११॥ ३।१३।९॥

सप्तमेऽनुवाके द्वितीयः खण्डः ।

---

१—आ । २ कृत्— ३ सर्वत्र ऐसा पाठ । ४—स्र । ५ दृप्—। ६ दृभ, सम्भवती । ७ य भेती । ८ म् ॥

तदेतदमृतं गायनय् । एतेन वै प्रजापतिरमृतत्वमगच्छदेतेन देवा एतेनर्षयः ॥२॥ तदेतद्ब्रह्म प्रजापतयेऽब्रवीत् प्रजापतिः[1] परमेष्ठिने प्राजापत्याय परमेष्ठी प्राजापत्यो देवाय सवित्रे देवस्सविताऽग्नयेऽग्निरिन्द्रायेन्द्रः काश्यपाय काश्यप ऋश्यशृङ्गाय काश्यपाय ऋश्यशृङ्गः काश्यपो देवतरसे श्यावसायनाय[2] काश्यपाय देवतरा श्यावसायनः काश्यपश्शुषाय वाह्नेयाय काश्यपाय शुषो[3] वाह्नेयः[4] काश्यप इन्द्रोताय[5] दैवापाय शौनकायेन्द्रोतो दैवापश्[6]शौनको दृतय ऐन्द्रोतये शौनकाय दृतिरैन्द्रोतिश्शौनकः पुलुषाय प्राचीनयोग्याय पुलुषः प्राचीनयोग्यस्सत्ययज्ञाय पौलुषये प्राचीनयोग्याय सत्ययज्ञः पौलुषिः प्राचीनयोग्यस्सोमशुष्माय सात्ययज्ञाय प्राचीनयोग्याय सोमशुष्मस्सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वाशयायाऽऽल्लकेयाय[7] माहावृषाय राज्ञे हृत्स्वाशय आल्लकेयो माहावृषो राजा जनश्रुताय[8] काण्डिवियाय जनश्रुतः काण्डिवियस्सायकाय जानश्रुतेयाय काण्डिवियाय सायको जानश्रुतेयः काण्डिवियो नगरिणे जानश्रुतेयाय काण्डिवियाय नगरी जानश्रुतेयः काण्डिवियश्शङ्खाय[10]

---

१. 'काश्यपो' अधिक है। २ श्यावसाय। ३ भूषो, शूषो। ४, वाह्ने। ५ इन्द्रात्-। ६-पिश्। ७ श्लोक्-। ८ स् सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वा' अधिक है। ९ जानुश्रु-, जानश्रु-। १० शिरा-।

शाट्यायन[11] आत्रेयाय राद्रश्शाट्यायनिरात्रेयो रामाय क्रातुजातेयाय वैयाघ्रपद्याय रामः क्रातुजातेयो वैयाघ्रपद्यः—॥२॥३॥४०॥

सप्तमेऽनुवाके तृतीयः खण्डः ।

—शङ्खाय बाभ्रव्याय शङ्खो बाभ्रव्यो दत्ताय कासायन[1] आत्रेयाय दत्तः कासायनिरात्रेयः कँसाय वारकये कँसो वारकिः मोष्ठपादाय वारक्याय मोष्ठपादो वारक्यः[2] कँसाय वारक्याय[3] कँसो वारक्यो जयन्ताय वारक्याय जयन्तो वारक्यः कुबेराय वारक्याय कुबेरो वारक्यो जयन्ताय वारक्याय जयन्तो वारक्यो जनश्रुताय वारक्याय जनश्रुतो वारक्यस्सुदत्ताय[4] पाराशर्याय सुदत्तः पाराशर्योऽषाढायो[5]त्तराय पाराशर्यायाऽषाढ[5] उत्तरः पाराशर्यो विपश्चिते शकुनिमित्राय पाराशर्याय विपश्चिच्छकुनिमित्रः पाराशर्यो जयन्ताय पाराशर्याय जयन्तः पाराशर्यः—॥१॥३॥४१॥

सप्तमेऽनुवाके चतुर्थः खण्डः ।

—श्यामजयन्ताय लौहित्याय श्यामजयन्तो लौहित्यः पल्लिगुप्ताय लौहित्याय पल्लिगुप्तो लौहित्यस्सत्यश्रवसे लौहित्याय[1] सत्य-

११—नाय ।

१—नाय, कात्याजय—। २ चर—। ३ प्—। ४ सुदत्ता, सुदत्ताय।
५ अप् (!), आष्—॥

१ लोह—!

श्वा लौहित्यः कृष्णधृतये सात्यकये कृष्णधृतस्सात्यकिश्श्याम-सुजयन्ताय लौहित्याय श्यामसुजयन्तो लौहित्यः कृष्णदत्ताय लौहित्याय कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय मित्रभूति[2] लौहित्यश्श्यामजयन्ताय लौहित्याय श्यामजयन्तो लौहित्यस्त्रि-वेदाय कृष्णराताय लौहित्याय त्रिवेदः कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय[3] यशस्वी जयन्तो लौहित्यो जयकाय लौहित्याय जयको लौहित्यः कृष्णराताय लौहित्याय कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय विपश्चिद्दृढजयन्तो लौहित्यो वैपश्चिताय[4] दार्ढजयन्तये दृढजयन्ताय लौहित्याय वैपश्चितो दार्ढ-जयन्ति[5]र्दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये गुप्ताय लौहित्याय ॥१॥ तदेतदमृतं गायत्रमथ यान्यन्यानि गीतानि काम्यान्येव तानि काम्यान्येव तानि ॥२॥३।४२॥

सप्तमेऽनुवाके पञ्चम खण्डः । सप्तमोऽनुवाकस्समाप्तः ॥

---

२–ति । ३ 'श्यामजयन्तो लौहित्याय' अधिक है । ४ वैविप्–। ५–द् ॥

# [ चतुर्थोऽध्यायः ]

श्वेताश्वो दशतो हरिनीलोऽसि हरितस्तृशस्समानबुद्धो मा हिंसीः । न मां त्वं वेत्स मद्रूत ॥१॥ यदभ्यवचरणो[1]ऽभ्यवैपि स्वपन्तम्पुरुषमकोविदमश्ममयेन[2] वर्मणा वरुणोऽन्तर्दधातु मा ॥२॥ यदभ्यवचरणो[3]ऽभ्यवैपि स्वपन्तम्पुरुषमको विदमयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥३॥ यदभ्यवचरणो[3]ऽभ्यवैपि स्वपन्तम्पुरुषमकोविदं लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥४॥ यदभ्यवचरणो[3]ऽभ्यवैपि स्वपन्तम्पुरुष[4]मकोविदं रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥५॥ यदभ्यवचरणो[3]ऽभ्यवैपि स्वपन्तम्पुरुषमकोविदं सुवर्णमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥६॥

आयुर्माता[5] मतिः पिता नमस्त आविद्योपय ।

महो नामाऽसि विश्वायुस्तस्मै ते विश्वाह[6] नमो

नमस्ताम्राय नमो वरुणाय[7] नमो जिघांसते ॥७॥ यक्ष्म राजन्मा[8] मां हिंसीः । राजन् यक्ष्म मा हिंसीः । तयोस्संविदानयोस्सर्वमायुर-यान्यहम्[9] ॥८॥४।१॥

प्रथमोऽनुवाकस्समाप्तः ।

---

१–णा । २ इति मन्त्रमयेन । ३ अयाणय । ४ संक्षेप है । ५ मातन । ६–चाह्वाय । ७ रुणाय । ८ मं ॥

पुरुषो वै यज्ञः ॥१॥ तस्य यानि चतुर्विंशतिर्वर्षाणि[1] तत्प्रात-स्सवनम् । चतुर्विंशत्यक्षरा गायत्री । गायत्रम्प्रातस्सवनम् ॥२॥ तद्वसूनाम् । प्राणा[2] वै वसवः । प्राणा हीदं सर्वं वसादददते ॥३॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा[3] वसव इदम्मे प्रातस्सवन माध्यन्दिनेन सवनेनानुसंतनुतेति । अगदो हैव भवति ॥४॥ अथ यानि चतुश्चत्वारिंशत्व वर्षाणि[4] तन्माध्यन्दिनं सवनम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यन्दिनं सवनम् ॥५॥ तद्रुद्राणाम् । प्राणा वै रुद्राः । प्राणा हीदं सर्वं रोदयन्ति ॥६॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् स ब्रूयात्प्राणा रुद्रा इदम्मे माध्यन्दिन सवनं तृतीयसवनेनानुसंत-नुतेति । अगदो हैव भवति ॥७॥ अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत्तृतीयसवनम् । अष्टाचत्वारिंशदक्षरा जगती । जागत तृतीयसवनम् ॥८॥ तदादित्यानाम् । प्राणा वा आदित्याः । प्राणा हीदं सर्वमाददते ॥९॥ स यद्येनमेतस्मिन् काल उपतपदु-पद्रवेत्स ब्रूयात्प्राणा आदित्या इदम्मे तृतीयसवनमायुषानु-सतनुतेति । अगदो हैव भवति ॥१०॥ एतद्ध तद्विद्वान् ब्राह्मण

---

१–ति । २–णा । ३ वे अधिक है । ४ वर्ष्माणि ।

उवाच महिदास ऐतरेय उपतपति किमिदमुपतपसि योऽहमनेनो-पतपता न प्रेष्यामीति । स ह षोडशशतं वर्षाणि जिजीव । प्र ह षोडशशतं वर्षाणि जीवति नैनस्माणस्साम्प्यायुषो जहाति य एवं वेद ॥११॥४।२॥

द्वितीयोऽनुवाकस्समाप्तः ।

त्र्यायुषं कश्यपस्य जमदग्नेस्त्र्यायुषम् ।
त्रीण्यमृतस्य पुष्पाणि त्रीण्यायूंषि मेऽकृणोः ॥१॥
स नो मयोभूः पितवाविशस्व शान्तिको यस्तनुवे स्योनः ॥२॥
येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु ।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥३॥४।३॥

तृतीयोऽनुवाकस्समाप्तः ।

अरण्यस्य वत्सोऽसि विश्वनामा विश्वाभिरत्वणोऽपाम्पववो-ऽसि वरुणस्य दूतोऽन्तर्धिनाम ॥१॥ यथा त्वममृतोमर्त्येभ्योऽन्तर्हितो-ऽस्येवं त्वमस्मानघायुभ्योऽन्तर्धेहि । अन्तर्धिरसि स्तेनेभ्यः ॥२॥४।४॥

चतुर्थोऽनुवाकस्समाप्तः ।

---

१ सम्पू ॥
२ प्रियाय । २ जीवा । ३ आयुषि । ४ ता । ५ यतोका । ६ य । ७–र्यो । ८ प्रा ।
१ विश्वोद्–र्ण । २–समा । ३ स्तर्धेनाम । ४ त । ५ मर्त्येभ्यो ॥

व्युषि सविता भवस्युदेष्यन् विष्णुरुद्यन्पुरुष उदितो बृहस्पति-रभियन्मघवेन्द्रो वैकुण्ठो माध्यान्दिने भगोऽपराह्ण[2] उग्रो देवो लो-हितायन्नस्तमिते यमो भवसि ॥१॥ अश्वस्तु सोमो राजा निशाया-म्पितृराज[3]स्त्वग्ने मनुष्यान्प्रविशसि पयसा पशून् ॥२॥ विरात्रे भवो भवस्यपररात्रेऽङ्गिरा अग्निहोत्रवेलायाम्भृगुः ॥३॥ तस्य दद्दे[4]-तदेव मण्डलमूधः । तस्यैतौ स्तनौ यद्वाक् च प्राणश्च । ताभ्या-म्मेधुक्ष्वाऽप्यायम्ब्रह्मचर्य[5]म्प्रजाम्पशून् स्वर्ग लोकं सजातवन-स्याम् ॥४॥ एता आशिष[6] आशासे । भूर्भुवस्स्वः । उदिते शुक्रमा-दिश[7] । तदात्मन्दधे ॥५॥४५॥

पञ्चमोऽनुवाकस्समाप्तः ।

भगेरथो हैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण आस ॥१॥ तद्ु ह कुरुपञ्चालानाम्ब्राह्मणा[1] ऊचुर्भगेरथो ह वा अयमैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाणः[2] । एतेन[3] कथां वदिष्याम इति ॥२॥ तं हाऽभ्येयुः । तेभ्यो[4] हाऽभ्यागतेभ्योऽपचितीश्चकार ॥३॥ अथ हैषां स भाग आत्रत्राजोप्त्वा[5] केशश्मश्रूणि नखान्निकृत्याऽऽज्ये-

---

१–श्रो । २ पराह्णे । ३–ज । ४ त । ५–य । ६ आसिष । ७ आदिप ॥

१–णाञ्च– २ यत्त्यम– ३ एततेन । ४ 'मा' अधिक है । ५ उपत्वा

नाऽभ्यज्य दण्डोपानहम्विभ्रत ॥४॥ तान् होवाच ब्राह्मणा भगवन्तः कतमो वस्तद्वेद यथाऽऽश्रावितमत्याश्राविते देवान् गच्छत इति ॥५॥ अथ होवाच कतमो वस्तद्वेद यद्विदुपस्सूद्गाता सुहोता स्वध्वर्युस्सुमानुपविदाजायत इति ॥६॥ अथ होवाच कतमो वस्तद्वेद यच्छन्दाँसि प्रयुज्यन्ते यथानि सर्वाणि संस्तुतान्यभिसम्पद्यन्त इति ॥७॥ अथ होवाच कतमो वस्तद्वेद यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥८॥ अथ होवाच कतमो वस्तद्वेद यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ॥९॥४।६॥

षष्ठेऽनुवाके प्रथमः खण्डः ।

एतान् हैनान् पञ्च प्रश्नान् पप्रच्छ ॥१॥ तेषां ह कुरुपञ्चालानाम्वको दाल्भ्योऽनूचान आस ॥२॥ स होवाच यथाऽऽश्रावितमत्याश्राविते देवान् गच्छत इति प्राच्यां वै राजन् दिश्याश्रावितमत्याश्राविते देवान् गच्छतः । तस्मात्प्राङ् तिष्ठन्नाश्रावयति प्राङ् विष्ठन्नत्याश्रावयतीति ॥३॥ अथ होवाच यद्विदुपस्सूद्गाता सुहोता स्वध्वर्युस्सुमानुपविदाजायत इति यो वै मनुष्यस्य सम्भूतिं वेदेति होवाच तस्य सूद्गाता सुहोता स्वध्वर्युस्सुमानुपवि-

---

* ज्या ॥

१–पाञ्च्–। २ अस्म–। ३ सम–। ६ मँच्–।

दाजायत इति प्राणा उ ह वाव राजन् मनुष्यस्य सम्भूतिरेवेति[४] ॥४॥ अथ होवाच यच्छन्दांसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुतान्यभिसम्पद्यन्त इति गायत्रीमु ह वाव राजन् सर्वाणि छन्दांसि संस्तुतान्यभिसम्पद्यन्त इति ॥५॥ अथ होवाच यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो ह वाव राजन् गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥६॥ अथ होवाच[५] यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति-॥७॥४॥७॥

षष्ठेऽनुवाके द्वितीयः खण्डः ।

—यो वै गायत्र्यै मुखं वेदेति होवाच तं दक्षिणा प्रतिगृहीता न हिंसन्तीति ॥१॥ अग्निर्ह वाव राजन् गायत्रीमुखम् । तस्माद्यदप्रावभ्यादधाति[१] भूयानेव[२] ■ तेन भवति वर्धते । एवमेवैवं विद्वान्ब्राह्मणः प्रतिगृह्णन्भूयानेव भवति वर्धत उ एवेति॥२॥ स होवाचाऽनूचानो वै किलाऽयमब्राह्मण आस । त्वामहमनेन यज्ञेनैमीति ॥३॥ तस्य वै ते तयोद्धास्यामीति होवाच यथैकराडेव भूत्वा स्वर्गं लोकमेष्यसीति ॥४॥ तस्मा एतेन गायत्रेणोद्गीथेनोज्जगौ[३] । स हैकराडेव भूत्वा स्वर्गं लोकमियाय ।

---

४ सम्भूतिद्धुर, सम्भूतिर्द्धर । ५ हे ॥

१ प्रदन्-। २-येद् । ३ गायत्र सो ।

तेन[४] हैतेनैकराडेव भूत्वा स्वर्गं लोकमेति [य एवं वेद] ॥५॥ ओं वा इति द्वे अक्षरे । ओं वा इति चतुर्थे । ओं वा इति षष्ठे । हुम्भा ओं वागित्यष्टमे ॥६॥ तेन हैतेन प्रतीदर्शोऽस्य भयदस्याऽऽसमात्यस्योज्जगौ ॥७॥ तं होवाच किं त आगास्यामीति । स होवाच हरीमे देवाश्वा वागायेति । तथेति । तौ हास्मा आजगौ । तौ हैनमाजग्मतुः ॥८॥ स वा एष उद्गीथः कामानां सम्पद्[५] वा३चों वा३चों वा३च् हुम् भा ओं वागिति। साङ्गो हैव स तनुरमृतस्सम्भवति य एतदेव वेदाथो यस्यैवं विद्वानुद्गायति ॥९॥४॥८॥

षष्ठेऽनुवाके तृतीय खण्ड[६] । षष्ठोऽनुवाकस्समाप्त ॥

---

पुरुषो वै यज्ञः पुरुषो होद्गीथः । अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमाः ॥१॥ ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधति। तस्य वाचमेवा[१]ग्निरभिदधाति प्राणं वायुश्चक्षुरादित्यश्श्रोत्रं चन्द्रमाः ॥२॥ तदाहुस्स वा उद्गाता यो यजमानस्य[२] प्राणेभ्योऽधि मृत्युपाशानुन्मु[३]ञ्चतीति ॥३॥ तद्यस्यैवं विद्वान् प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥४॥ अथ यस्यैवं

४ तेन । ५-दो । ६ खण्ड ॥

१ मवा । २ यजा- ३ उमुञ्च-।

विद्वानुद्गायति य एवास्य प्राणे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥५॥ अथ यस्यैवं विद्वान् प्रतिहरति य एवास्य चक्षुषि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥६॥ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्य श्रोत्रे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥७॥ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुञ्चति ॥८॥ तदाहुस्स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृणातीति ॥९॥४॥९॥

सप्तमेऽनुवाके प्रथमः खण्डः ।

तद्यस्यैवं विद्वान्हिङ्करोति य एवास्य लोमसु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥१॥ अथ यस्यैवं विद्वान् प्रस्तौति य एवास्य त्वचि मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥२॥ अथ यस्यैवं विद्वानादिमादत्ते य एवास्य मांसेषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥३॥ अथ यस्यैवं विद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥४॥ अथ यस्यैवं विद्वान्प्रतिहरति य एवास्याङ्गेषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥५॥ अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्थिषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥६॥ अथ यस्यैवं

४–द्रा । ५ उद्गायति । ६ प्राणे । ७ नास्ति । ८ प्रतिहरति ॥
१ न्त्–। २ या ।

विद्वान् निधनमुपैति य एवास्य मज्जसु मृत्युपाशस्स तस्मादेवैनं स्पृणाति ॥७॥ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्येऽधिमृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृणाति ॥८॥ तदाहुस्स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृत्वा स्वर्गे लोके सप्तधा दधातीति ॥९॥ स वा एष इन्द्र वैमृध उद्यन् भवति सवितोदितो मित्रस्संगवकाल इन्द्रो वैकुण्ठो मध्यन्दिने समावर्तमानश्शर्व उग्रो देवो लोहितायन् प्रजापतिरेव संवेशोऽस्तमितः ॥१०॥ तद्यस्यैवं विद्वान् हिङ्करोति य एवास्योद्यतस्स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥११॥ अथ यस्यैवं विद्वान् प्रस्तौति य एवास्योदिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१२॥ अथ यस्यैवं विद्वानादिमादत्ते य एवास्य संगवकाले स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१३॥ अथ यस्यैवं विद्वानुद्गायति य एवास्य मध्यन्दिने स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१४॥ अथ यस्यैवं विद्वान् प्रतिहरति य एवास्यापराह्णे स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१५॥ अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्तंयतस्स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१६॥ अथ यस्यैवं विद्वान्नि-

---

३ सम्भवक्-। ४-५,-भोजनायां गमा। ४-क्र। ६ माध्न् ७ स। ८ येषा।

धनमुपैति य एवास्यास्तमिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥२७॥ एवं वा एवंविद्वाना यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैन साङ्ग सतनु सर्वमृत्योम्स्मृत्वा स्वर्गे लोके[१] सप्तधा दधाति ॥१८॥८।१०॥

सप्तमेऽनुवाके द्वितीय खण्ड । सप्तमोऽनुवाकस्समाप्त ॥

---

पद्[१] ह[२] वै देवतास्स्वयम्भुवो[३]ऽग्निर्वायुरसावादित्यः प्राणोऽन्न वाक् ॥१॥ ता[४]श्रैष्ठ्ये[५] व्यवदन्ता[६]ऽहं श्रेष्ठा[७]ऽस्म्यहं श्रेष्ठाऽस्म्य[८]? [स्मि] मां श्रियमुपाध्वमिति ॥२॥ ता अन्योन्यस्यै[७] श्रेष्ठतायै नाऽतिष्ठन्त । ता अब्रुवन् वा अन्योन्यस्यै[८] श्रेष्ठतायै तिष्ठामहे एता[९] सम्प्रवामहे यथा श्रेष्ठा[३]स्सम इति ॥३॥ ता अग्निमब्रुवन्कथ त्व[१०]श्रेष्ठोऽसीति ॥४॥ सोऽब्रवीदहं देवानाम्मुखमस्म्यहमन्यासाम्प्रजानाम् । मयाऽऽहुतयो हूयन्ते । अह देवानामन्न वि[११]करोम्यहम्मनुष्याणाम् ॥५॥ स य[१२]न्न स्यामुखा एव देवास्स्युरमुखा अन्याः प्रजाः। नाऽऽहुतयो हूयेरन्[१३]। न देवानामन्न विक्रियेत[१४] न मनुष्याणाम् ॥६॥ तत इद सर्वम्परा-

---

* सप्त ॥

१ पद्ह । २ ह । ३-ध्वा । ४-ठे । ५ व्यवद्-। ६ श्रेप्-। ७ प्यान्या-। ८-हे । ९ एत । १० त्वा । ११-कार्-। १२ ध्न । १३ हूयन्ते (!) छिपा कर हूयरन् (!) किया गया । १४-र ।

भवेत्ततो न किंचन परिशिष्येतेति[15] ॥७॥ एवमेवेति होचुर्नैवेह[18]
किंचन परिशिष्येत यत्[16] त्वं न स्या इति ॥८॥ अथ वायुमब्रुव-
न्कथमु त्वं श्रेष्ठोऽसीति ॥९॥ सोऽब्रवीदहं देवानाम्प्राणोऽस्म्यह[17]-
मन्यासाम्प्रजानाम् । यस्मादहमुत्क्रामामि ततस्स प्रध्वते ॥१०॥
स यदहं न स्यां तत इदं सर्वम्पराभवेत्ततो न किंचन परिशिष्येते-
ति ॥११॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत[18] यत्त्वं न स्या
इति ॥१२॥।१९॥

अष्टमेऽनुवाके प्रथमः खण्डः ।

अथादित्यमब्रुवन् कथमु त्वं श्रेष्ठोऽसीति ॥१॥ सोऽब्रवीद-
हमेवेदमहर्भवाम्यहमस्तंयन्रात्रिः । मया चक्षुषा कर्माणि क्रियन्ते ।
स यदहं न स्यां नैवाहस्स्यान्न[1] रात्रिः । न कर्माणि क्रियेरन् ॥२॥
तत इदं सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥३।
एवमेवेति[2] होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥४॥
अथ प्राणमब्रुवन् कथमु[3] त्वं श्रेष्ठोऽसीति ॥५॥ सोऽब्रवीत्प्राणो
भूत्वाऽग्निर्दीप्यते । प्राणो भूत्वा चन्द्रका[4]दमनुभवति । प्राणो
भूत्वाऽऽदित्य उदेति । प्राणादवम्प्राणाद्वान् ॥६॥ स यदहं न स्यां तत[5]

---

१५-ध्ये । १६ य । १७ अहदम् । १८ ऽत्र ह ॥
१ हंन । २ प । ३ उक्त् । ४ अंक्ष— ५ नत (!) ।

इदं[६] सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥७॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥८॥ अथान्नमब्रुवन् कथन्नु[९] त्वं श्रेष्ठमसीति ॥९॥ तदब्रवीन्मयि प्रतिष्ठायाभिर्दीप्यते । मयि प्रतिष्ठाय वायुराकाशमनुविभवति । मयि प्रतिष्ठायादित्य उदेति । मदेव गावो मद्वाक् ॥१०॥ स यदहं न स्यां तत[५] इदं[७] सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥११॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥१२॥ अथ वाचमब्रुवन् कथमु[६] त्वं श्रेष्ठासीति ॥१३॥ साब्रवीन्मय्येवेदं विज्ञायते मयाऽदः । स यदहं न स्यां नैवेदं विज्ञायेत नाऽदः ॥१४॥ तत[५] इदं सर्वम्पराभवेन्नैवेह किंचन परिशिष्येतेति[८] ॥१५॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥१६॥४।१०।२॥

अष्टमेऽनुवाके द्वितीयः खण्डः ।

ता अब्रुवन्नेता वै किल सर्वा देवताः । एकैकामेवानुस्मः[१] । स यन्नु नस्सर्वासां देवतानामेकाचन न स्यात्तत इदं सर्वम्पराभवेत्ततो न किंचन परिशिष्येत । हन्त सार्धं समेत[२] यच्छ्रेष्ठं

---

६ सन्धेय करते हैं । 'स ( ! न के स्थान में ) स्या इति' यहां तक छोड़ दिया है । ७ इ–,त्य् (!) संक्षिप्त दिया है । ८–शिष्य । ९ तुर् ॥
१–म । २ साम–।

हत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् ॥१०॥ अपहत्य मृत्यु-मपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥११॥४॥१३॥

अष्टमेऽनुवाके तृतीयः खण्डः ।

ता अब्रुवन्त्वयि प्रतिष्ठायैतमुपच्छामेति । ता अब्रवी-दास्येन[1] प्राणेन मुख्यानास्येन[2] प्राणेन मामुपाप्नवाथेति ॥१॥ ता एतेन प्राणेनौकारेण वाच्यकारमभिनिमेष्यन्त्यो[3] हिङ्कारादृका-रमोकारेण वाचमनुस्वरन्त्य उभाभ्याम्प्राणाभ्यां गायत्रमगायन्भो-वा३चोवा३चोवा३च् हुय मा वो वा इति ॥२॥ स यथोभया-पदी प्रतितिष्ठत्येवमेव[4] स्वर्गे लोके प्रत्यतिष्ठन् । प्रति स्वर्गे लोके तिष्ठति य एवं वेद ॥३॥ य उ ह वा एवं विदस्माल्लोकात्प्रैति स प्राण एव भूत्वा वायुमप्येति वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं वृष्ट्यैवेमं लोकमनुविभवति ॥४॥ ऋषयो ह सत्रमासां चक्रिरे[5] । ते पुनः पुनर्यह्वीभिर्यह्वीभिः प्रतिपद्भिस्स्वर्गस्य लोकस्य द्वारं नानुचन प्रजुर्धिरे ॥५॥ त उ श्रमेण तपसा ब्रह्मचर्येणेन्द्रमवरुरु-धिरे ॥६॥ तं होचुस्स्वर्गं वै लोकमैप्सिष्म[6] । ते पुनः पुनर्यह्वीभि-र्यह्वीभिः[7] प्रतिपद्भिस्स्वर्गस्य लोकस्य द्वारं नानुचनाऽभुत्स्महि[8] ।

---

१ मास्यैनेन । २-मा,-ऑन् । ३-मत । ४ प्र- । ५-श्र- । ६ पेप्सिष्ट । ७ 'यह्वीभिर्' अधिक है । ८ ऽभूत- । १० मेयन्त- ।

तथा नोऽनुशाधि यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमियामेति ॥७॥ तान् होवाच को वस्स्थविरतम इति[१] ॥८॥४।१४॥

अष्टमेऽनुवाके चतुर्थ खण्ड ।

अहमित्यगस्त्यः ॥१॥ स वा एहीति होवाच तस्मै वै[१] तेऽहं तद्वक्ष्यामि[२] यद्विद्वाँसस्स्वर्गस्य लोकस्य[३] द्वारमनुप्रज्ञायाऽनार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेष्यथेति ॥२॥ तस्मा एतं गायत्रस्योद्गीथमुपनिषदममृतमुवाचाऽग्नौ वायावादित्ये[४] प्राणेऽन्ने वाचि ॥३॥ ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ॥४॥ एवमेवैवं विद्वान् स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्तस्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेति ॥५॥४।१५॥

अष्टमेऽनुवाके पञ्चम खण्ड । अष्टमोऽनुवाकस्समाप्त ॥

---

एवं वा एतं गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायो[१]वाचाऽगस्त्य इषाय श्यावाश्वय इषश्श्यावाश्विर्गौपृक्तये[२] गौपृक्ति-

६ 'अहमित्य्' (!) अधिक है ॥

१ नास्ति । २–क्षामि । ३ 'द्वारमवैवं' अधिक है । ४ धाय ॥

१–गीत्–। २–श्यायो ।

औद्दालायनाय[१] ज्वालायनश्शाट्यायनये[४] शाट्यायनी रामाय क्रतुजातेयाय वैयाघ्रपद्याय[५] रामः क्रतुजातेयो वैयाघ्रपद्यः—॥१॥ ४।१६॥

नवमेऽनुवाके प्रथमः खण्डः।

—शङ्खाय बाभ्रव्याय शङ्खो बाभ्रव्यो दक्षाय कात्यायनय[१] आत्रेयाय दक्षः कात्यायनिरात्रेयः कंसाय वारक्याय[२] कंसो वारक्यस्सुयज्ञाय शाण्डिल्याय सुयज्ञश्शाण्डिल्योऽग्निदत्ताय शाण्डिल्यायाऽग्निदत्तश्शाण्डिल्यस्सुयज्ञाय शाण्डिल्याय सुयज्ञश्शाण्डिल्यो जयन्ताय वारक्याय जयन्तो वारक्यो जनश्रुताय वारक्याय जनश्रुतो वारक्यः[३] सुदत्ताय पाराशर्याय ॥१॥ सैषा[४] शाट्यायनी गायत्रस्योपनिषदेवमुपासितव्या ॥२॥ ४।१७॥

नवमेऽनुवाके द्वितीयः खण्डः। नवमोऽनुवाकस्समाप्तः॥

---

केनेषितम्पतति प्रेषितम्मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्र क उ देवो युनक्ति ॥१॥
श्रोत्रस्य श्रोत्रम्मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः।
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति ॥२॥

---

३ न्या-। ४-आये। ५ वाघ्या-॥

१-आय। २ प-। ३-श्रो और 'जनश्रुताय वारक्याय जनश्रुते (!) वारक्यस्' अधिक है। ४-श्रो।

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।
न विद्म[1] न विजानीमो[2] यथै[3]तदनुशिष्याद्[4] ॥३॥

अन्यदेव तद् विदितादथो अविदितादधि ।
इति शुश्रुम[5] पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥४॥

यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥

यन्मनसा न मनुते येनाऽऽहुर्मनो[6] मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥

यच्छ्रोत्रेण न शृणोति[8] येन श्रोत्रमिदं श्रुतम् ।
तदेव[9] ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥

यत् प्राणेन न प्राणिति[10] येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥९॥४।१८॥

दशमेऽनुवाके प्रथमः खण्डः ।

यदि मन्यसे सुवेदेति दह्रमेवाऽपि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु । अथ नु मीमांस्यमेव ते मन्येऽविदितम् ॥ २ ॥

---

१ विद्‌ । २-म । ३ ऽवे अधिक है । ४-शिष्-। ५-श्रू-। ६ मन्यो । ७ मतेम् । ८ नम् । ९ उकानुक है । १०-णीति ॥

नाऽहम्मन्ये सुवेदेति नो न वेदेति वेद च ।

यो नस्तद् वेद तद्वेद नो न वेदेति वेद च ॥२॥

यस्याऽमतं तस्य मतम्मतं[1] यस्य न वेद सः ।

अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥

प्रतिबोधविदितम्[2]मतममृतत्वं हि विन्दते ।

आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥

इह चेदवेदीदथ सत्यमस्ति । न चेदिहाऽवेदीन्महतीविनष्टिः ।

भूतेषु-भूतेषु विचित्य धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति॥५॥४।१९

दशमेऽनुवाके द्वितीय खण्ड ।

ब्रह्म ह देवेभ्यो विजिग्ये। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्ताऽस्माकमेवाऽयं विजयः। अस्माकमेवाऽयं महिमेति ॥१॥ तद्धैषां विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानन्त[1] किमिदं यक्षमिति ॥२॥ तेऽग्निमब्रुवञ्जातवेद एतद् विजानीहि किमेतद् यक्षमिति । तथेति ॥३॥ तदभ्यद्रवत्[2] । तमभ्यवदत् कोऽसीति । अग्निर्वा[3] अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥४॥ तस्मिँ-

---

१ अम-। २-वित्-॥

१-यत । २-म । ३ ऽहम ।

स्त्वयि किं वीर्यमिति । अपीदं सर्वं दहेयम् यदिदम्पृथिव्यामिति ॥५॥ तस्मै तृणं निदधावेतद्दहेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् । स तत एव निववृते नैनदशकं विज्ञातुं यदेतद्यक्षमिति ॥६॥ अथ वायुमब्रुवन् वायवेतद् विजानीहि किमेतद् यक्षमिति । तथेति ॥७॥ तद[4]भ्यद्रवत् । तमभ्यवदत् कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥८॥ तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वमाददीय यदिदम्पृथिव्यामिति ॥९॥ तस्मै तृणं निदधावेतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाकाऽदातुम् । स तत एव निववृते[5] नैनदशकं विज्ञातुं यदेतद्यक्षमिति ॥१०॥ अथेन्द्रमब्रुवन् मघवन्नेतद् विजानीहि किमेतद् यक्षमिति । तथेति । तद[6]भ्यद्रवत् । तस्मात् तिरोदधे ॥११॥ स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् । तां होवाच किमेतद् यक्षमिति ॥१२॥४२०॥

दशमेऽनुवाके तृतीयः खण्डः ।

ब्रह्मेति होवाच ब्रह्मणो वा एतद् विजये महीयध्वम् इति । ततो हैव विदांचकार ब्रह्मेति ॥१॥ तस्माद्वा एते देवा अतितरामि-

---

४–म । ५ निववृत । ६ म (!) ।

वान्यान् देवान् यदग्निर्वायुरिन्द्रः । ते ह्येनन्नेदिष्ठम्[1]पस्पृशुस्[2]ते ह्येनत्[3]
प्रथमो विदांचकार ब्रह्मेति ॥२॥ तस्माद् वा इन्द्रोऽतितरामिवा-
ऽन्यान् देवान् । स ह्येनन्नेदिष्ठम्पस्पर्श स ह्येनत् प्रथमो विदांचकार
ब्रह्मेति ॥३॥ तस्यैष आदेशो यदेतद् विद्युतो व्यद्युतदा[4]३ इति[5] ।
न्यमीमिषदा[6]३ । इत्यधिदैवतम् ॥४॥ अथाऽध्यात्मम् । यदेतद्
गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं[7] संकल्पः ॥५॥ तद्ध
तद्वनं नाम । तद्वनमित्युपासितव्यम् । स य एतदेवं वेदाऽभिहैनं
सर्वाणि भूतानि संवाञ्छन्ति[8] ॥६॥ उपनिषदम्भो ब्रूहीति । उक्ता
त उपनिषत् । ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥७॥ तस्यै तपो
दमः कर्मेति प्रतिष्ठा[9] वेदास्सर्वाङ्गाणि सत्यमायतनम् ॥८॥
यो[10] वा एतामेवं वेदाऽपहत्य पाप्मानमनन्ते स्वर्गे लोकेऽज्येये
प्रतितिष्ठति ॥९॥४।२१।

दशमेऽनुवाके चतुर्थः खण्डः । दशमोऽनुवाकस्समाप्तः ॥

---

१ नेदिष्ठा,नेदिष्ठम । २ ते । ३ श्रन् । ४ विद्यु । ५ इती३ । ६ मीए् । ७ सुफ् । ८ सम्वॅदन्ति । ९ ष्ठो । १०–ए ॥

आशा वा[1] इदमग्र आसीद्विष्यदेव[2] । तदभवत् । ता आपो-ऽभवन् ॥१॥ तास्तपोऽतप्यन्त । तास्तपस्तेपाना हुस्सिसेव प्राचीः प्राश्वसन् । स वाव प्राणोऽभवत् ॥२॥ ताः प्राण्याऽपानन् । स वा अपानोऽभवत् ॥३॥ ता अपान्य[3] व्यानन्[4] । स वाव व्यानो-ऽभवत् ॥४॥ ता व्यान्य समानन् । स वाव समानोऽभवत् ॥५॥ तास्समान्योदानन् । स वा उदानोऽभवत् ॥६॥ तदिदमेकमेव सधमाद्यमासीदविविक्तम्[5] ॥७॥ स नामरूपमकुरुत[6] । तेनैनद्व्य-विनक्[7] । वि ह पाप्मनो विच्यते य एवं वेद ॥८॥ तदसौ वा आदित्यः प्राणोऽग्निरपानः[8][9] आपो व्यानो दिशस्समानश्चन्द्रमा उदानः ॥९॥ तद्वा एतदेकमभवत्प्राण एव । स य एवमेतदेकम्भ-वद्वेदैवं हैतदेकधा भवतीत्येकधैव श्रेष्ठस्स्वानाम्भवति[10] ॥१०॥ तदग्निर्वै प्राणो वागिति पृथिवी वायुर्वै प्राणो वागित्यन्तरिक्षमा-दित्यो वै प्राणो वागिति द्यौर्दिशो वै प्राणो वागिति श्रोत्रं चन्द्रमा वै प्राणो वागिति मनः पुमान्वै प्राणो वागिति स्त्री॥११॥ तस्येदं सृष्टं शिथिलम्भुवनमासीदपर्याप्तम् ॥१२॥ स मनोरूपमकुरुत ।

---

१ 'आशा वा' का पुनः पाठ है । २ येद् । ३ अपान । ४ प्-। ५-माद्यम् । ६-रूपम् । ७-विनोत् । ८-हम् । ९ उपा- १० स्वे-॥

तेन तत्पर्याप्नोति । इदं ह वा अस्येदं सृष्टमशिथिलम्भुवनम्पर्या-
प्नुम्भवति य एवं वेद ॥१३॥४।२२॥

एकादशोऽनुवाके प्रथमः खण्डः ।

सैषा[1] चतुर्धा विहिता[2] श्रीरुद्गीथस्साम्याक्यं ज्येष्ठब्राह्मणम् ॥१॥
प्राणो वावोद्वाग्गी[3] स उद्गीथः ॥२॥ प्राणो वावामो वाक् सा
तत्साम ॥३॥ प्राणो वाव को वागृक् तदर्क्यम् ॥४॥ प्राणो वाव
ज्येष्ठो वाग्ब्राह्मणं तज्ज्येष्ठब्राह्मणम् ॥५॥ उपनिषदम्भो
ब्रूहीति[4] । उक्ता त उपनिषदस्य ते धातव उक्ताः[5] । त्रिधातु विपु
धाव त उपनिषदमब्रूमेति[6] ॥ ६ ॥ एतच्कुक्लं कृष्णं ताम्रं
सामवर्ण इति ह स्माह यदेव[7] शुक्लकृष्णे ताम्रो वर्णोऽभ्यवैति
स वै[8] ते इद्ने[9] दशम[10] मानुषमिति त्रिधातु । स ऐन्नत क नु म
उत्तानाय[11] शयानायेमा देवता बलिं हरेयुरिति ॥७॥४।२३॥

एकादशोऽनुवाके द्वितीयः खण्डः ॥

स पुरुषमेव प्रपदनायाऽवृणीत ॥१॥ तम्पुरस्तात्प्रत्यञ्चम्भा-

---

१ ऽस्साऽ । २ विहीता । ३ वाग्गी , गी । ४ ब्रू ।५-च । ६-पदू ।
७-दा । ८ वे । ९-त । १० दशम, श के पूर्व एक अक्षर पढ़ा नहीं
जाता, कदाचित् करा है । ११ उत्तानाय ॥

विशत्। तस्मा उरुरभवत्। तदुरस उरस्त्वम् ॥२॥ तस्मा अत्रसद् एता देवता वर्लि हरन्ति ॥३॥ वाचमनुहरन्तीमग्निरस्मै वर्लि हरति ॥४॥ मनोऽनुहरच्चन्द्रमा अस्मै वर्लि हरति ॥५॥ चक्षुरनु-हरदादित्योऽस्मै वर्लि हरति ॥६॥ श्रोत्रमनुहराद्दिशो[1]ऽस्मै वर्लि हरन्ति ॥७॥ प्राणमनुहरन्तं वायुरस्मै वर्लि हरति ॥८॥ तस्यैते निष्नाताः[2] पन्था वलिवाहना[3] इमे प्राणाः। एवं हैतं निष्नाताः पन्था बलिवाहनास्सर्वतोऽपियन्ति[4] प्राणा य एवं वेद ॥९॥ सा हैषा ब्रह्मासन्दीमारूढा। आ हास्मै ब्रह्मासन्दीं हरन्त्यपि[5] ह ब्रह्मासन्दीं रोहति य एवं वेद ॥१०॥ तदेतद् ब्रह्मयशस[6] श्रिया परिवृढम्। ब्रह्म ह तु सन् यशसा श्रिया परिवृढो भवति य एवं वेद ॥११॥ तस्यैष आदेशो[7] योऽयं दक्षिणेऽक्षन्नन्तः। तस्य यच्छुक्लं तदृचां रूपं यत्कृष्णं तत्साम्नां यदेव ताम्रमिव बभ्रुरिव[8] तद्यजुषाम[7] ॥१२॥ स एवायं चक्षुषि पुरुष एष इन्द्र एष प्रजा-पतिस्समः पृथिव्या सम आकाशेन समो दिवा समस्सर्वेण भूतेन। एष परो दिवो दीप्यते। एष एवेदं सर्वमित्युपासि-तव्यम् ॥१३॥४॥२४॥

एकादशोऽनुवाके तृतीयः खण्डः।

---

१ अदिशः। २ श्या। ३ बलिवाह। ४ ऽप्य। ५ हरति। ६-श। ७ श्या। ८-ऊरु॥

सत्ताऽसत्ताऽसच सत्य वाक् च मनश्च [ मनश्च ] वाक् च चक्षुश्च श्रोत्र च श्रोत्र च चक्षुश्च श्रद्धा च तपश्च तपश्च श्रद्धा च तानि षोडश ॥१॥ षोडशकलम्ब्रह्म । स य एवमेतत् षोडशकलम्ब्रह्म वेद तमेवैतत् षोडशकलम्ब्रह्माऽप्येति ॥२॥ वेदो ब्रह्म तस्य सत्यमायतन शमः प्रतिष्ठा दमश्च ॥३॥ तद्यथा श्वः भैष्यन् पापात्कर्मणो जुगुप्सेतैवमेवाऽहरहः पापात्कर्मणो जुगुप्सेताऽऽ कालात् ॥४॥ अथैषा दशपदी विराट् ॥५॥ दश पुरुषे स्वर्ग-नरकाणि । तान्येन स्वर्ग गतानि स्वर्ग गमयन्ति नरक गतानि नरक गमयन्ति ॥६।४।२५॥

एकादशेऽनुवाके चतुर्थ खण्ड ।

मनो नरको वाङ् नरकः प्राणो नरकश्च चक्षुर्नरकश्श्रोत्रं नरकस्त्वङ्नरको हस्तौ नरको गुद नरकश्शिश्न नरकः पादौ नरकः ॥१॥ मनसा परीक्ष्याणि वेदेति वेद ॥२॥ वाचा रसान्वेदेति वेद ॥३॥ प्राणेन गन्धान्वेदेति वेद ॥४॥ चक्षुषा रूपाणि वेदेति वेद ॥५॥ श्रोत्रेण शब्दान्वेदेति वेद ॥६॥ त्वचा सस्पर्शान्वे-देति वेद ॥७॥ हस्ताभ्या कर्म्माणि वेदेति वेद ॥८॥ उदरेणा-

---

१--ब्रह्म ॥

१--त्रा ॥

ऽशनयां वेदेति वेद ॥९॥ शिश्नेन रामान्वेदेति वेद ॥१०॥ पादाभ्यामध्वनो वेदेति वेद ॥११॥ प्लक्षस्य प्रास्रवणस्य प्रादेशमात्रादुदक् तत्पृथिव्यै मध्यम् । अथ यत्रैते सप्तर्षयस्तद्दिवो मध्यम ॥१२॥ अथ यत्रैत ऊपास्तत्पृथिव्यै हृदयम् । अथ यदे- तत्कृष्णं चन्द्रमासि तद्दिवो हृदयम् ॥१३॥ स य एवमेते द्यावा- पृथिव्योर्मध्ये च हृदये च वेद ना[2]ऽका[3]मोऽस्माल्लोकात्प्रैति ॥१४॥ नमोऽतिसामा[4]यैऽस्तुरेता[5]य धृतराष्ट्राय पार्थुश्रवसाय[6] ये च मायां रक्षन्ति ते मा रक्षन्तु । स्वाम्ति । कर्मेति गार्हपत्यश्शम[7] इत्याह- वनीयोदम इत्यन्वाहार्यपचनः ॥१५॥४॥२६॥

एकादशोऽनुवाके पञ्चमः खण्डः । एकादशोऽनुवाकस्समाप्त. ॥

---

कस्सविता । का सावित्री । अग्निरेव सविता । पृथिवी सावित्री ॥१॥ स यत्राऽग्निस्तत्पृथिवी यत्र वा पृथिवी तदाग्निः । ते द्वे योनी । तदेकम्मिथुनम् ॥२॥ कस्सविता । का सावित्री । वरुण एव सविता । आपस्सावित्री ॥३॥ स यत्र वरुणस्तदापो यत्र वा[1]ऽऽपस्तद्वरुणः । ते द्वेयोनी । [ तदेकम्मिथुनम् ] ॥४॥

---

२-यद् । ३-कामो । ४-सामय-सामाय । ५ एतुर् । ६ पाञ्जुंथ्-से ठीक किया हुआ है । ७-मय् ॥

कस्सविता । का सावित्री । वायुरेव सविता । आकाशस्सावित्री ॥५॥ स यत्र वायुस्तदाकाशो यत्र वाऽऽकाशस्तद्वायुः । ते द्वे[२] योनी । तदेकम्मिथुनम् ॥६। कस्सविता। का सावित्री । यज्ञ एव सविता । छन्दांसि सावित्री ॥७॥ स यत्र यज्ञस्तच्छन्दांसि यत्र वा छन्दांसि तद्यज्ञः । ते द्वे[२] योनी । तदेकम्मिथुनम् ॥८॥ कस्सविता। का सावित्री। स्तनयित्नुरेव सविता । विद्युत् सावित्री ॥९॥ स यत्र स्तनयित्नुस्तद्विद्युद्यत्र वा विद्युत्[३] तत्स्तनयित्नुः। ते द्वे[२] योनी । तदेकम्मिथुनम् ॥१०॥ कस्सविता[२] । का सावित्री । आदित्य एव सविता। द्यौस्सावित्री॥११॥ स यत्राऽऽदित्यस्तद्द्यौर्यत्र वा द्यौस्तदादित्यः । ते[२] द्वे योनी । तदेकम्मिथुनम् ॥१२॥ कस्सविता[२]। का सावित्री। चन्द्र एव सविता । नक्षत्राणि सावित्री ॥१३॥ स यत्र चन्द्रमस्तन्नक्षत्राणि यत्र वा नक्षत्राणि तच्चन्द्रः । ते द्वे[३] योनी । तदेकम्मिथुनम् ॥१४॥ कस्सविता[२] । का सावित्री । मन एव सविता । वाक् सावित्री ॥१५॥ स यत्र मनस्तद्वाग्यत्र [वा] वाक् तन्मनः । ते[२] द्वे योनी । तदेकम्मिथुनम्॥१६॥ कस्स[२]विता । का सावित्री । पुरुष [एव] सविता । स्त्री सावित्री । स यत्र पुरुषस्तत् स्त्री[४] यत्र वा स्त्री तत्पुरुषः। ते द्वे योनी। तदेकम्मिथुनम् ॥१७॥४॥२७॥

द्वादशोऽनुवाके प्रथमः खण्डः ।

१ २ ... [illegible]

तस्या एष प्रथमः पादो भूस्तत्सवितुर्वरेण्यमिति । अग्निर्वै वरेण्यम् । आपो वै वरेण्यम् । चन्द्रमा वै वरेण्यम् ॥१॥ तस्या एष द्वितीयः पादो भर्गमयो भुवो भर्गो देवस्य धीमहीति । अग्निर्वै भर्गः । आदित्यो वै भर्गः । चन्द्रमा वै भर्गः ॥२॥ तस्या एष तृतीयः पादस्स्वर्धियो यो नः प्रचोदयादिति । यज्ञो वै प्रचोदयाति । स्त्री च वै पुरुषश्च[1] प्रजनयतः ॥३॥ भूर्भुवस्स्वस्तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहीति । अग्निर्वै भर्गः । आदित्यो वै भर्गः । चन्द्रमा वै भर्गः ॥४॥ स्वर्धियो यो नः प्रचोदयादिति । यज्ञो वै प्रचोदयाति । स्त्री च वै पुरुषश्च प्रजनयतः ॥५॥ भूर्भुवस्स्वस्तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति[2]। यो वा एतां सावित्रीमेवं वेदाऽप पुनर्मृत्युं तरति सावित्र्या एव सलोकतां जयति सावित्र्या एव सलोकतां जयति ॥६॥४॥२८॥

द्वादशेऽनुवाके द्वितीयं खण्डं । द्वादशोऽनुवाकस्समाप्तः ।

इत्युपनिषद्ब्राह्मणं समाप्तम् ॥

---

१–सँ। २ 'यज्ञो वै प्रचोदयाति । स्त्री च वै पुरुषश्च प्रजनयत' आधिक्य भरो ॥

# १—ऋषि-नामों की सूची।

वं० से वंश का अभिप्राय है।

## २—निर्वचनादि सूची ।

## ३–(क) ऋचादिसूची ।

## (ख)